## ॥ अथ शूद्रकमलाकरस्याऽनुक्रमणिका ॥

× ही खूण ज्या पृष्ठांकांपुढें असेल ते सांक व बाकीचे निरंक समजावे.

## ॥ इत्यनुक्रमणिका समाप्ता ॥

---

श्रीगणेशायनमः ॥ ॥ प्रणम्यरामंपितरौकमलाकरशर्मणा ॥ रामकृष्णतनूजेनशूद्रधर्मोनिरूप्यते ॥ १ ॥ तत्रशूद्रत्वमूढसवर्णा[1]जत्वंविप्रत्वादिवत् यद्यपिसर्गाद्यकालीनेविश्वामित्रादौन्न नैतत्तथापितत्रादृष्टविशेषारब्ध-शरीरत्वमेव ब्राह्मणत्वमन्यत्रतुनूर्वोक्तमेवंशूद्रेपीतिदिक् ॥ तत्रपद्भ्यांशूद्रोअजायत ॥ शूद्रोमनुष्याणामश्वःपशू-नामिति बह्वृचतैत्तिरीयादिश्रुतिभिर्मुखबाहूरुपज्जातास्तस्यवर्णायथाक्रमम् ॥ लोकानांतुविवृद्ध्यर्थंमुखबाहूरु-पादतः ॥ ब्राह्मणंक्षत्रियंवैश्यंशूद्रंचनिर[2]वर्तयदितिमन्वादिस्मृतिभिश्च शूद्रस्यवर्णत्वेपिकर्मणांनिषेधोवचना-न्न्यायाच्चावगम्यते ॥ तथाचशतपथश्रुतिः पद्युवाएतच्छ्मशानंयच्छूद्रइति ॥ पभ्द्यांयुज्यतेइतिपद्युजंगमामि-त्यर्थः ॥ तस्माच्छूद्रोयज्ञेऽनवक्लृप्तोनहिदेवताअन्वसृज्यतेतितैत्तिरियश्रुतिः ॥ न्यायस्तुपूर्वमीमांसायामाद्या-धिकरणसिद्धौद्वैतीयीक[3]ः षाष्ठ[4]श्च ॥ तथाहि आद्येधिकरणेस्वाध्यायोध्येतव्य इत्यध्ययनस्यकर्मोत्पन्नतव्यश्रुत्या

---

१ सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु । आनुलोम्येन संभूता जात्या ज्ञेयास्तएव त इतिमनुवचनात् । सवर्णेभ्यः सवर्णासुजायंते हिसजातय इतियाज्ञवल्क्यवचनाच्च ॥ मनुवचनस्थमानुलोम्यग्रहणं तदुत्तरवचने एव उपयोजितं कुल्लूकादिभिः ॥ २ उत्पादितवान् । ३ द्वितीयाध्यायगतः । ४ षष्ठाध्यायस्थः ।

स्वाध्यायार्थत्वावगतेरक्षरग्रहणार्थत्वेनादृष्टार्थत्वात्तावतैवविध्यर्थविश्रांतेर्विचारानाक्षेपः ॥ मीमांसाशास्त्रं पूर्वपक्षे नारभ्यते विचारमकृत्वैववेदमधीत्यस्नायादितिस्मृतेः समावर्तितव्यं ॥ ततश्चक्रतुभिरध्ययनविधिसिद्धविद्याभावेनस्वयमेवद्विजवच्छूद्रेपिविद्याक्षेपात्पुस्तकादिनाविद्यांसंपाद्यशूद्रस्याप्यधिकारउक्तः ॥ षाष्ठेच शूद्राधिकरणपूर्वपक्षेसिद्धांतेत्वध्ययनस्यार्थधीहेतुत्वेनदृष्टार्थत्वात्साम्नामृगक्षराभिव्यक्तिद्वारा स्तोत्रार्थत्वमिव तव्यप्रत्ययावगतस्वाध्यायार्थत्वद्वारार्थज्ञानार्थत्वाद्विचारंविना च तदयोगात्तदर्थंशास्त्रमारंभणीयं ॥ एतच्चाथातोधर्मजिज्ञासेत्यत्राध्ययनविधेर्दृष्टार्थत्वादित्यतःशब्दव्याख्यया शबरभाष्येसूचितं ॥ तेनविचारंविना विध्यर्थासमाप्तेर्वेदमधीत्यस्नायादितिस्मार्तस्नानोत्कर्षः ॥ ततश्चअध्ययनविधेः उपनयीततमध्यापयीत ॥ उपनीयगुरुः शिष्यं महाव्याहृतिपूर्वकं ॥ वेदमध्यापयेदेनंशौचाचारांश्चशिक्षयेदितिस्मृत्याउपनयनदृष्टार्थत्वाच्चोपनीतान्प्रत्येवप्रवृत्तत्वादुपनयनस्य चाधानेसर्वशेषत्वादितिद्वितीयाध्यायन्यायेन वसंतेब्राह्मणमुपनयीत ग्रीष्मेराजन्यंशरदिवै-

---

१ मीमांसावेदवाक्यविचारः । २ हस्तपादादिप्रक्षालनादिरूपंशौचम् । ३ आचारो गुर्वादीनां प्रत्युत्थानासनदानाभिवादनादिः ।

श्यमितिश्रुतिभिस्त्रैवर्णिकेष्वेवविधानेनशूद्रे तदभावात्क्रतुविधीनांचाध्ययनविधिसिद्धविद्यत्रैवर्णिकविषयत्वेनोपक्षीणानामन्यथानुपपत्त्यभावेन विद्यानाक्षेपकत्वाच्छूद्रस्यकर्मस्वनधिकारइतिषाष्ठः सिद्धांतोपिफलं ॥ तत्र यद्यपिश्रुत्यंतरेअष्टवर्षंब्राह्मणमुपनयीत तमध्यापयीतेत्यध्यापनेउपनीतग्रहणंनाध्ययने तथाप्यध्यापनस्य वृत्त्यर्थत्वेनयाजयेदितिवद्विध्यनर्हत्वादाचार्यनिष्ठत्वेन माणवकसंस्कारत्वाभावाच्च ब्राह्मणउपगच्छेत्सोधीयीतेति विपरिणतोर्थोज्ञेय इतिविवरणादयः ॥ स्वाध्यायवच्चमसाध्वर्यून्वृणीत इतिवच्चोपनयनसंस्कार्यस्यापि बटोरनेनैव विनियोगादुपादेयत्वमितिपार्थसारथिराणकादयः तत्रवसंतादिवाक्यैरुपनयनप्राप्तेर्ब्राह्मणविशिष्टमुपनयनमनूद्याष्टवर्षकालोविधीयते ॥ नचवाक्यभेदः उद्देश्यापर्यवसानेनाविशिष्टोद्देशेतदभावादितिहेमाद्रिः ॥ तत्त्वंतुविनिगमकाभावाच्छाखांतरत्वादुभयत्रापिविशिष्टविधिरिति ॥ अतएवोपादेयत्वेनविवक्षितंपुंस्त्वम् ॥ अन्यथोपनयने संस्कार्यत्वाद्ग्रहैकत्ववत्पुंस्त्वाविवक्षया स्त्रीणामप्युपनयनप्राप्तिः केनवार्येत ॥ यत्तुतंत्ररत्ने तस्या यावदुक्तमाशीर्ब्रह्मचर्यमित्यत्राष्टवर्षवाक्ये द्वितीयया संस्कार्यत्वाल्लिंगाविवक्षयान्यायेन स्त्रिया उपनयनप्राप्तावपि निषेधादेवोपनयनाभाव इत्युक्तं तदध्वर्युंवृणीतइतिवत्स्वाध्यायस्योपादेयत्वाद्संता-

दिवाक्येपितत्त्वाच्चिंत्यं ॥ अतएवषंढस्यनोपनयनंशूद्रसधर्मत्त्वात् ॥ अतएवमिताक्षरायांदेवलः ॥ षंढको
हीनलिंगःस्यात्संस्काराार्हश्चनैवसः ॥ याज्ञवल्क्यः ॥ षंढंतुब्राह्मणंहत्वाशूद्रहत्याव्रतंचरेदित्याह ॥ बौ-
धायनसूत्रस्मृत्यर्थसारादयस्तुषंढस्यवचनादुपनयनमाहुः ॥ एतच्चाग्रेवक्ष्यामः ॥ अतएवोपादेयगतत्वादष्टवर्ष-
त्वमेकत्वंचविवक्षितं ॥ नन्वेवंन्यायतएवशूद्रस्यकर्मानधिकारसिद्धेस्तस्माच्छूद्रो यज्ञेनवक्लृप्तइतिनिषेधोव्यर्थ
इतिचेत्न्यायप्राप्तानुवादइतिभट्टाः ॥ वेदांतिनस्तुतव्यप्रत्ययेनस्वाध्यायस्यभाव्यत्वावगतेःप्रथमोपस्थितत्वा-
द्धुंफडादौतस्यावश्यकत्वादैकरूप्याच्चाक्षरग्रहणमेवभाव्यं ॥ नचक्रतुभिरर्थज्ञानाक्षेपात्पुस्तकादिनाप्यधिकाराप-
त्तिः ॥ यथा भट्टमतेऽध्ययनविधिसिद्धविद्याग्रहणेन क्रतूनांशूद्रे विद्यानाक्षेपकत्वं तथार्थज्ञानमपिअध्ययन-
विधिद्वाराक्षरग्रहणोपायेनचरितार्थत्वान्नशूद्रस्यपुस्तकाद्युपायमाक्षिपतीतितुल्यःप्राप्यतांत्राक्षेपाच्छूद्रस्याधिकारः
सतुपद्युवाइतिश्रुत्यानिषिध्यते ॥ अस्मान्निषेधादेवाध्ययनस्याक्षरग्रहणार्थत्वंअन्यथाशूद्रस्यप्राप्त्यभावान्निषेधो

१ प्राङ्नाभिवर्धनात्पुंसोजातकर्मविधीयते । मन्त्रवत्प्राशनंचास्यहिरण्यमधुसर्पिषामितिमनुवचनव्याख्यानावसरे पुंसामेवैतेजातकर्मादि-
संस्काराविधीयन्ते नपुंसकस्यनैवसन्तीति मेधातिथिप्रभृतिभिरपिव्याख्याकारैः साधितम् ।



व्यर्थःस्यादित्याहुः॥सर्वथाशूद्रस्यकर्मण्यनधिकारःसिद्धः ग्रहणविवादस्तुउपनयीतेति णीञ्धातोःसंमाननोत्संज-
नाचार्यकरणज्ञानभृतिविगणनव्ययेषुनिञ्इतिपाणिनिस्मृतेराचार्यकरणत्वेभाव्येआत्मनेपदस्मृते रुपनयनस्यांग-
त्वेनाफलत्वेपि उपनीयतुयःशिष्यंवेदमध्यापयेद्द्विजः ॥ संकल्पंसरहस्यंचतमाचार्यंप्रचक्षतेइतिस्मृतेरध्यापनफ-
लमेवांगेउपचर्यते वर्मवाएतद्यज्ञायक्रियते यत्प्रयाजानूयाजाइज्यंतेइतिवत्तेनाध्यापनाविधिप्रयुक्तत्वेप्यध्ययन-
स्यमाणवकनिष्ठत्वेनांतरंगत्वादर्थज्ञानार्थत्वमपि क्रतूनांचतात्सिद्धविद्योपजीवित्वादुपायांतरानाक्षेपाच्छूद्रस्यान-
धिकारइतिप्राभाकराः ॥ तदयुक्तं ॥ आचार्यकरणत्वस्यकर्त्रभिप्रायत्वेणीञ्धातोर्ञित्वात्स्वरितञितः कर्त्रभि-
प्रायेक्रियाफलइत्यनेतेनात्मनेपदसिद्धेः संमाननेत्यादिविधानंव्यर्थंस्यात् ॥ तेनाकर्त्रभिप्रायेप्यात्मनेपदविधान-
मेतत्सूत्रं ॥ तदुक्तंमहाभाष्ये अकर्त्रभिप्रायार्थोयमारंभइतिततश्चक्रियाफलत्वेप्यकर्त्रभिप्रायत्वान्नाचार्यकरणत्वं
भाव्यमितिदिक् ॥ विशेषस्तुविवरणेतंत्ररत्नेचज्ञेयः ॥ तत्रशूद्रस्यवेदश्रवणेतावन्नाधिकारः ॥ कपिलाक्षीरपाने-
नब्राह्मणीगमनेनच ॥ वेदाक्षरविचारेणशूद्रश्चांडालतांव्रजेदितिपराशरोक्तेः ॥ उत्तरमीमांसायांव्याससूत्रेपिश्रव-

१ कल्पोयज्ञविद्या । २ रहस्यमुपनिषदः । ३ एकवर्णागौःकपिला ।

णाध्ययनप्रतिषेधात् स्मृतेश्चेत्यत्रशूद्रस्यवेदश्रवणादिनिषिद्धं ॥ इदंशंकराचार्यैर्व्याख्यातं ॥ श्रवणप्रतिषेधोभव-
ति ॥ अथहास्यवेदमुपशृण्वतस्त्रपुजतुभ्यांश्रोत्रपूरणमिति ॥ पद्युवाएतच्छ्मशानंयच्छूद्रइतिभवतिचोदाहरणेजि-
व्हाच्छेदोधारणेशरीरभेदइति ॥ तथात्रेदार्थज्ञानमपि[1] ॥ नशूद्रायमतिंदद्यान्नोच्छिष्टंनहविःकृतं ॥ नचास्योपदि-
शेद्धर्मंनचास्यव्रतमादिशेदितिपाराशरोक्तेः ॥ मतिर्वेदार्थोपदेशः ॥ नशूद्रायपरिज्ञानंदद्याद्वेदमुखेनत्विति पराशरीयपु-
राणात् ॥ वेदार्थज्ञाननिषेधान्मीमांसाद्यध्ययनमपिनिषिद्धं ॥ तथात्रेदमूलत्वात्स्मृतिपुराणाद्यध्ययनंनिषिद्धं ॥
पुराणंपंचमोवेदःपुराणंवेदसंमितमितिस्मृतेः ॥ तस्मादिदंवेदविद्भिरध्येतव्यंप्रयत्नतः ॥ शिष्येभ्यश्चप्रवक्तव्यंस-
द्वृत्तेष्वेवधर्मतः ॥ इतिस्मृतिकौमुद्यामत्रिस्मृतेः ॥ मनुरपि निषेका[2]दिःश्मशानांतोमंत्रैर्यस्योदितोविधिः ॥ त-
स्यशास्त्रेऽधिकारोऽस्मिन्ज्ञेयोनान्यस्यकस्यचित् ॥ एवंस्मृत्यादिश्रवणमपि[1] नाध्येतव्यमिदंशास्त्रंवृष[3]लस्यतुस-
न्निधौ ॥ योधीतेचैवमोहात्मासयातिनरकान्बहूनितिकौर्मोक्तेः ॥ वायुसंहितायामपि ॥ नावेदविद्भ्यःकथनीयमे-

१ निषिद्धमितिशेषः । २ निषेकोगर्भाधानं श्मशानशब्देन तत्रकर्तव्योऽन्त्येष्टिविधिर्गृह्यते । गर्भाधानादिरन्त्येष्टिपर्यंतोयस्य वर्ण-
स्यमन्त्रैर्विधिरनुष्ठानकलापउक्तस्तस्यद्विजस्यैवास्मिन्मानवधर्मशास्त्रेऽध्ययनेधिकारोनत्वन्यस्य ॥ ३ वृषलस्यसंनिधौ शूद्रसमीपे ॥



तत्पुराणरत्नंपुरशासनस्य ॥ नाभक्तशिष्यायचनास्ति[1]केभ्योदत्तंहियत्तन्नरकंददाति ॥ भविष्यत्पुराणे ॥ यान्ये-
तानित्वयोक्तानिधर्मशास्त्राणिसुव्रत ॥ नेच्छामिश्रोतुंविप्रेंद्रगुह्यान्येतानिहिद्विज ॥ त्रयाणामेववर्णानांप्रोक्तान्ये-
तानिपंडितैः ॥ श्रेयसेनतुशूद्राणामत्रमेवचनंशृणु ॥ ब्राह्मणादिषुवर्णेषुत्रिषुवेदाःप्रतिष्ठिताः ॥ मन्वादीनिच
शास्त्राणितथांगानिचसर्वशः ॥ अत्रश्रवणस्यवाचनस्यचशूद्रप्राधान्येनसाक्षान्निषेधः ॥ नतुविप्रद्वारा ॥ तदुक्तं
महाभारते श्रावयेच्चतुरोवर्णान्कृत्वाब्राह्मणमग्रतइति ॥ नारदीयेपि ॥ येचधर्मपराराजन्देवद्विजपरायणाः ॥
तेषांमध्येहरेरग्रेपठनीयंद्विजातिभिरिति ॥ भागवतेपि ॥ स्त्रीशूद्रद्विजबंधूनांत्रयीनश्रुतिगोचरा ॥ कर्मश्रेयसि
मूढानांश्रेयएवंभवेदिह ॥ इतिभारतमाख्यानंकृपयामुनिनाकृतमिति ॥ द्विजाच्छूद्रायांजातोद्विजबंधु[2]र्व्रात्योवा ॥
भविष्ये ॥ चतुर्णामपिवर्णानांयानिप्रोक्तानिश्रेयसे ॥ धर्मशास्त्राणिराजेंद्रशृणुतानिनृपोत्तम ॥ विशेषतस्तुशूद्रा-

१ नास्तिपरलोकस्तत्साधनमदृष्टं तत्साक्षीश्वरोवा येषांतेनास्तिकाः । २ षोडशाब्दादिभ्योनतरं सावित्र्युपदेशरहिता ब्राह्मणादयो
द्विजाव्रात्यसंज्ञयाव्यवह्रियन्ते ॥ द्विजातयः सवर्णासुजनयन्त्यव्रतांस्तुयान् । तान्सावित्रीपरिभ्रष्टान्व्रात्यानिति विनिर्दिशेदितिमनुवचनात् ॥
व्रतहीनाअसंस्कार्याः सवर्णास्वपि येसुताः । उत्पादिताःसवर्णेनव्रात्या इतिबहिष्कृता इतिदेवलवचनाच्च ॥

णांपावनानिमनीषिभिः ॥ अष्टादशपुराणानिचरितंराघवस्यच ॥ वायवीये ॥ एतानिनृपशार्दूलधर्मशास्त्राणिपं-
डितैः ॥ साधारणानिप्रोक्तानिवर्णानांश्रेयसेसदा ॥ चतुर्णामिहराजेंद्रश्रोतुमर्हाणिसुव्रत ॥ स्कांदेसूतसंहिता-
यां ॥ अन्येचब्राह्मणाविष्णोराजानश्वतथैवच ॥ वैश्याश्वतारतम्येनज्ञानाभ्यासेऽधिकारिणः ॥ द्विजस्त्रीणामपि
श्रौतज्ञानाभ्यासेधिकारिता ॥ अस्तिशूद्रस्यशुश्रूषापुराणेनैववेदनं ॥ वदंतिकेचिद्विद्वांसःस्त्रीणांशूद्रसमानतां ॥
तथा सिद्धांतश्रवणंप्रोक्तंपुराणश्रवणंबुधैः ॥ सिद्धांतःस्मृत्यर्थः ॥ रामायणेपि ॥ पठन्द्विजोवा[1]गृषभत्वमीया-
त्स्यात्क्षत्रियोभूमिपतित्वमीयात् ॥ वणिग्जनः[2]पैण्यफलत्वमीयाच्छ्रु[3]ण्वंश्चशूद्रोपिमहत्त्व[4]मीयात् ॥ इदमपिवि-
प्रादिद्वारैव ॥ तदुक्तंभविष्ये ॥ देवार्चांपुरतःकृत्वाब्राह्मणांश्वनृपोत्तम ॥ श्रोतव्यमेवशूद्रेणतथान्यैश्वद्विजाति-
भिः ॥ पुराणश्रवणविधानादेवतदंतर्गतवैदिकमंत्रश्रवणेपिनदोषः ॥ तदुक्तंवार्तिके ॥ तानेववैदिकान्मंत्रान्भा-
रतादिनिवेशितान् ॥ विहायमंत्रनियमंलोकबुद्ध्याप्रयुंजत इति ॥ यद्यप्यदृष्टहेतुत्वंनवैदिकत्वंविनास्ति तेन

१ शब्दब्रह्मपारगत्वम् । २ पण्यैः क्रयद्रव्यैः साध्यं मूलादनेकगुणवृद्ध्यादिरूपं फलं यस्य तत्त्वं । ३ उपलब्धरामायणपुस्तकेषु जनश्च शूद्रोपीति पाठो दृश्यते । अत्र शृण्वन्नित्यध्याहार इति टीकाकारैरुक्तम् । ४ द्विजेतरसर्वप्रजाभ्यः श्रैष्ठ्यम् ।



स्तोत्रादेरपिवेदेक्वचित्सत्त्वंकल्प्यते तथापि वचनाद्दोषाभावः ॥ अनित्यस्यापिप्रवाहानादितयाकल्पसूत्रादि-
वन्नित्यविधिविषयत्वं ॥ यानिशंखेनविद्यास्थानान्युक्त्वाएतानिब्राह्मणोधिकुरुते सचवृत्तिंदर्शयतीतरेषामिति
बहुवचनेनज्ञानोपदेशोत्रिप्रद्वारेणैवेतिशूद्रस्याधिकारउक्तः सोपिश्रवणपरएव ॥ अत्रशूद्राणांविहितनिषिद्धा-
श्वधर्माश्शूद्रसमानामनुपनीतद्विजस्त्रीकुंड[1]गोलकसंकरजात्यादीनामपिज्ञेयाः ॥ तेचाग्रेवक्ष्यंते ॥ तत्सिद्धंशूद्रस्य
विप्रद्वारापुराणश्रवणेनज्ञानमिति ॥ अथशूद्रस्यमंत्रविचारः ॥ तत्रआविद्यत्वाद्वेदमंत्रेनाधिकारः ॥ व्यासोपि ॥
शूद्रोवर्णश्चतुर्थोपिवर्णत्वाद्धर्ममर्हति ॥ वेदमंत्रस्वधास्वाहावषट्कारादिभिर्विनेति ॥ नृसिंहतापिनीये ॥ सा-
वित्रींप्रणवंयजुर्लक्ष्मींस्त्रीशूद्रायनेच्छति ॥ पराशरभाष्येप्येवं ॥ रामतापिनीये ॥ सावित्रींलक्ष्मींयजुःप्रणवंय-
दिजानीयात्स्त्रीशूद्रःसमृतोधोगच्छति ॥ लक्ष्मींश्रींबीजं ॥ व्याहरणेजिव्हाछेदइतिश्रुतेश्च ॥ गौडनिबंधेतिथि-
तत्त्वेस्कांदे ॥ स्वाहाप्रणवसंयुक्तंशूद्रेमंत्रंददद्द्विजः ॥ शूद्रोनिरयमाप्नोतिब्राह्मणःशूद्रतामियात् ॥ एवंपुराणवि-

१ परदारेषुजायेतेद्वौसुतौ कुण्डगोलकौ । पत्यौजीवतिकुंडः स्यान्मृतेभर्तरिगोलक इतिमनुवचनाज्जीवत्पतिकायां जारेणोत्पन्नःकुंडो मृतपतिकायां जारेणोत्पन्नोगोलकः ॥

ष्णुसहस्रनामचंडीस्तोत्रादिपाठेप्यनधिकारः ॥ श्रवणमात्रेऽधिकारेणपाठाप्रसक्तेः ॥ तदुक्तंहरिवंशे ॥ सुगति-
मियाच्छ्रवणाच्चशूद्रजातिरिति ॥ अतएवभारतेविष्णुसहस्रनामसु ॥ वेदांतगोब्राह्मणःस्यात्क्षत्रियोविजयीभवेत् ॥
वैश्योधनसमृद्धःस्याच्छूद्रःसुखमवाप्नुयादित्यत्रशूद्रःश्रवणेनैवेतिशंकराचार्यैर्व्याख्यातम् ॥किंबहुनाशूद्रकर्तृकस्ना-
नदानश्राद्धादौविप्रस्यैवपौराणमंत्रपाठः शूद्रस्यतुश्रवणमात्रं॥श्रावयेच्चतुरोवर्णानित्यस्यनिषादस्थपतिंयाजयेदि-
तिवच्छृणुयुरित्यर्थेनशूद्रंप्रतिश्रवणजन्यज्ञानस्यैवकर्मभिर्ग्रहणात् ॥ पुराणपाठाभावेनतन्मंत्रेषुपाठाप्रसंगाच्च ॥
वाराहेपि ॥ अयमेवविधिःप्रोक्तःशूद्राणांमंत्रवर्जितः ॥ अमंत्रस्यतुशूद्रस्यविप्रोमंत्रेणगृह्यते ॥ अस्यश्राद्धप्रकरण-
पाठेपिइयंपरिभाषा ॥ नचसावाक्यरूपाप्रकरणेननियंतुंशक्या ॥ अतःशूद्रकर्तृकदानश्राद्धादौअर्थप्रकाशनार्थं
सर्वत्रविप्रेणमंत्रपाठःकार्यइतिशूलपाणिः ॥ वैदिकोपिविप्रेणपठनीयइत्याचार्यचूडामणिः ॥ माधवीयेप्येवम् ॥
श्राद्धेयस्यांशाखायांविप्रस्यमंत्रपाठउक्तः सशूद्रश्राद्धेपिस्यादेवेतिस्मृतिकौमुद्यां ॥ मदनपारिजातव्याख्या
त्वयुक्ताविषयाभावात् ॥ अमंत्रस्येतिविशेषणात्स्त्रीणांतत्तुल्यानांचेतिशूलपाणिः ॥ यत्तु तेनोक्तं मंत्रजन्यनि-

१ ब्राह्मणेनोढायां शूद्रकन्यायां जातोनिषादःसएवपारशवइत्युच्यते । निषादशब्देनात्र प्रतिलोमजातीयोनग्राह्यः ।



यमादृष्टसिद्धिस्तुनमस्कारेणैवानुज्ञातोस्यनमस्कारोमंत्रइति गौतमोक्तेरिति तच्चिंत्यं ॥ दृष्टद्वारैवहितत्प्राप्तिर्न
स्वातंत्र्येणनचमंत्रनिषेधेनियमादृष्टप्राप्तिः नमस्कारेणैवतात्सिद्धिश्चनहिसनमंत्रः अन्यथानखावपूतेऽप्यवघातज-
न्यादृष्टार्थसोपिक्रियेत ॥ कल्पतरुस्तु पौराणकर्मणांस्त्रीशूद्रान्प्रतिविशिष्यविधानात्तेषांचमंत्रविशिष्टानामुत्प-
स्यातथैवनियोगात्पौराणमंत्रपाठोभवत्येवेत्याह॥ तन्न नमस्कारेणबाधाद्वाराहविरोधाच्चवैदिकमंत्रस्थानेनमःशब्द
इत्यन्ये ॥तस्वंत्वमंत्रकेष्वेवसः ॥ तेनपितृणांनामगोत्रतइत्यादौयत्रद्विजानामपि नाममंत्रउक्तस्तत्रशूद्रस्यसर्वमंत्र-
निषेधेप्राप्तेप्रतिप्रसवमात्रार्थंगौतमीयं ॥ नतुतिलावपनादावपि ॥ अन्येतुआवाहनादिकर्तव्यंयथाशूद्रेणतच्छृणु ॥
देवानांदेवनाम्नातुपितॄणांनामगोत्रत इतिहेमाद्रौभविष्योक्तेः ॥ सर्वत्रदैवेदेवेभ्योनमः पित्र्येपितृभ्योनमइति
नाममंत्रमाहुः ॥ केवलस्यनाम्नःप्रयोगानर्हत्वात् ॥ तेननमइत्येतावानेवमंत्रइति आचार्यचूडामणिमदनपारि-
जातोक्तिःपरास्ता ॥ नमस्कारःपंचमहायज्ञमात्रपुरःसर इतिहरदत्तादयः तन्नश्राद्धादौनमोविधानस्यमूलांतर-
कल्पनापत्त्यासवार्थत्वात् ॥ अतएवविज्ञानेश्वरेणकृच्छ्रादौनमोमंत्रजपउक्तः ॥ अस्मत्पितृचरणास्तुनमस्कारेण
मंत्रेणपंचयज्ञान्नहापयेदितियाज्ञवल्क्योक्तौयज्ञशब्देन शूद्रकर्ममात्रोद्देशेननमस्कारविधानंयज्ञानामुद्देश्यानांपंच-

त्वेनविशेषणेग्रहैकत्वविवक्षावद्वाक्यभेदापत्तेः तेनशूद्रकर्तृकतुलादानादि[1]पूर्तेषुशूद्रस्यनमस्कारोमंत्रइत्याहुः ॥ पौराणस्तुविप्रस्येत्यविरोधः ॥ एतेननमस्कारस्यपंचयज्ञेष्वेवविधानाच्छूद्रस्यनविवाहहोमादीतिमदनपारिजातोक्तिःपरास्ता ॥ अतएवयोनमसास्वध्वरइतिश्रुतेर्नमस्कारेणवैखल्वपिनवदेवानमस्कारमितियज्ञोवैनमइतिहि ब्राह्मणंभवतीत्याश्वलायनोक्तेश्च नमस्कारस्यापिसर्वकर्मांगत्वं ॥ तच्च यथाद्विजानांतत्रतत्रवैदिकमंत्रोक्त्या बाधितंयच्चैत्ययज्ञादौप्रवर्त्ततेतथाशूद्रेपिकर्मोक्तौमंत्रानुक्तौचप्रवर्त्ततएव ॥ अतएवशूद्रस्यकातीयसूत्रोक्ता अष्टौ संस्काराविवाहश्चोक्तोहरिहरेण ॥ अतएवानुमतोस्यनमस्कारोमंत्रइतिगौतमीयःशूद्रेपिप्रतिप्रसवः[2] तस्यचानुष्ठेयाप्रकाशत्वेपिवचनात्त्वयथार्थमैंद्रीस्यादितिन्यायेनांगत्वं ॥ एतेनदेवताभ्यःपितृभ्यश्चेत्ययंवानमस्कारोमंत्रइति कृत्वाविज्ञानेश्वरमदनपारिजाताद्युक्तिर्मानाभावात्परास्ता ॥ अत्रकेचित् ॥ विप्रोमंत्रेणगृह्यतेइत्यत्रवैदिकोमंत्रो विप्रस्य ॥ पौराणस्तुशूद्रैःपठनीयः नवेदेष्वधिकारोहिकश्चिच्छूद्रस्यविद्यते ॥ पुराणेष्वधिकारोमेदर्शितोब्राह्मणे-

१ वापीकूपतडागादिदेवतायतनानिच । अन्नप्रदानमारामःपूर्तमित्यभिधीयते ॥ पुष्करिण्यःसभावापी देवतायतनानिच । आरामश्च विशेषेण पूर्तंकर्मविनिर्दिशेत् दितिचस्मृतिः ॥ अग्रेग्रंथकारेणापि पूर्तशब्दोव्याख्यातः ॥ २ अपवादस्यापवादः ।



रिहेतिशूलपाणौपाद्मोक्तेः श्रीदत्तोप्येवं तिथितत्त्वेस्मार्तस्तुवैदिकेतरमंत्रपाठेशूद्रस्याप्यधिकारः ॥ वेदमंत्रवर्ज्यं शूद्रस्येत्याचारचिंतामणौछंदोगाह्निकेचवचनाद्वेदेतिविशेषणात् श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचनेतिनिषेधो मंत्रेतरपुराणपरः ॥ पंचयज्ञस्नानश्राद्धेषुतुपौराणोपिन नमस्कारेणमंत्रेणेतिपंचयज्ञेषुब्रह्मक्षत्रविशांत्वेवंमंत्रवत्स्नानमिष्यते ॥ तूष्णीमेवहिशूद्रस्य सनमस्कारकं मतमिति योगियाज्ञवल्क्येन स्नाने अयमेवविधिःप्रोक्तः शूद्राणांमंत्रवर्जितइतिश्राद्धेचवाराहेविशिष्योक्तेरित्याह अनुमतोस्यनमस्कारोमंत्रइतिगौतमोप्येतत्परोवैदिकमंत्रपरश्चेत्याह तन्ननाध्येतव्यमिदंशास्त्रंवृषलस्यतुसान्निधाविति कौर्मेपुराणनिषेधेनवेदस्यदूरापास्तत्वात् ॥ अध्येतव्यं ब्राह्मणेनवैश्येनक्षत्रियेणच ॥ श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचन ॥ श्रोतंस्मार्तंचवैधर्मंप्रोक्तमस्मिन्नृपोत्तम ॥ तस्माच्छूद्रैर्विनाविप्रंनश्रोतव्यंकदाचनेतिशूलपाणौपुराणाधिकारेभविष्योक्तेश्च ॥ अतएवविप्रोमंत्रेणगृह्यतइति सर्वार्थंनश्राद्धमात्रपरमितिशूलपाणिः ॥ एतेननाध्येतव्यमितिनिषेधोमंत्रेतरपुराणपरइतिश्रीदत्तादिमैथिलमतमपास्तं ॥ विनाविप्रमित्युक्तेर्विप्रद्वारैवश्रवणमुक्तं ॥ धर्मशब्दस्तानिधर्माणीतिवत्क्लीबेविशेषस्तुनिर्णयसिंधौज्ञेयः ॥ किंच यथाद्विजानामध्ययनविधौ अधीतैर्मंत्रैरर्थस्मृतिंकुर्यादित्यर्थेनकर्मसुमंत्रपाठस्यैवांगत्वंनतुस्मृतेःमंत्राणाम-

क्रियात्वेनस्त्वतःकर्माग्रहणात् तथाशूद्राणांश्रावयेदितिश्रवणविधौश्रुतैर्विधिभिःप्रवृत्तिंकुर्यात् श्रुतैर्मंत्रैरर्थस्मृतिं कुर्यादित्यर्थेन शूद्रस्यतुलादिमहादानादिकर्मसुमंत्रश्रवणस्यैवांगत्वंनपाठस्य ॥ नन्वेवंश्रवणविधौश्रावयेच्च-तुरोवर्णानित्युक्तेर्द्विजानामपितुलादौमंत्रश्रवणमेवस्यान्नपाठइतिचेत् अत्रब्रूमः अध्येतव्यंब्राह्मणेनवैश्येनक्षत्रि-येणचेतिभविष्योक्तेः निषेकादिःश्मशानांत इत्यादिवचनादध्ययनस्यैवकर्मांगत्वं विदुषाब्राह्मणेनेदमध्येतव्यं प्रयत्नतइतिमनूक्तेः अन्यथा वेदाथर्वपुराणानिसेतिहासानिशक्तितः ॥ जपयज्ञप्रसिद्ध्यर्थंविद्यांचाध्यात्मि-कींजपेत् गाथानाराशंसीरितिहासपुराणानियद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्इत्यादिब्रह्मयज्ञविध्युच्छे-दापत्तेः पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः ॥ वेदाःस्थानानिविद्यानांधर्मस्यचचतुर्दशेतियाज्ञवल्कीयेज्ञा-

१ हिताहितज्ञो विद्वानिति गोविंदराजः । शास्त्राध्ययनफलज्ञ इति कुल्लूकः । सांगवेदविदिति नंदनः । अधीतवेदवेदांग इति राघवानंदः । तर्कव्याकरणमीमांसादिभिः शास्त्रान्तरैर्यस्यात्मा संस्कृतः स विद्वानिति मेधातिथिमतं दृश्यते । अस्य वचनस्य गोविंदराजीया व्याख्या । हिताहितज्ञेन ब्राह्मणेनेदंशास्त्रं प्रयत्नेनाध्येतव्यमिति । ब्राह्मणस्य प्रयत्नाध्ययनार्थोयमारंभः प्रयत्नग्रहणात्क्षत्रियवैश्ययोरप्यत्राध्ययनाधिकारः । तथा च निषेकादिः श्मशानांत इत्यादि वक्ष्यतीति ॥



नार्थत्वाच्चश्रवणंतुफलविशेषार्थं यइदंशृणुयान्नित्यंयश्चापिपरिकीर्तयेत् ॥ नाशुभंप्राप्नुयात्किंचित्सोमुत्रेहचमा-नव इत्यादौचंडीपाठादौचफलश्रुतेः ॥ याज्ञवल्क्योपि यइदंश्रावयेद्विद्वान्द्विजान्पर्वसुपर्वसु अश्वमेधफलंतस्य तद्भवाननुमन्यतामिति ॥ तेनद्विजानांयथावेदाध्ययनंज्ञानकरणद्वाराकर्मार्थत्वात्पारायणाद्यर्थमक्षरग्रहणार्थत्वाच्च दृष्टार्थंनहिसिद्धांतेऽक्षरग्रहणस्यभाव्यत्वंत्यज्यते पारायणार्थत्वेनदृष्टार्थत्वात् तन्मात्रार्थत्वंतुनेष्यते एतन्न्यायरत्न-मालायांस्पष्टमुक्तंनकेवलार्थविज्ञानसिद्धिरस्यप्रयोजनंदृष्टार्थंदृश्यते यद्यत्रसर्वंफलमिष्यतइति तथापुराणाद्यध्य-यनश्रवणयोर्द्वयोर्विधानेप्यध्ययनंज्ञानद्वाराकर्मार्थत्वाद्दृष्टार्थं श्रवणंत्वदृष्टार्थमेवशूद्राणांतुविपरीतंश्रवणंज्ञानद्वा-राकर्मार्थत्वाद्दृष्टार्थंफलार्थत्वाददृष्टार्थंच अध्ययनंतुनास्त्येव श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचनेतिवचनात्य-द्यपिवार्तिके राणकेनच धर्मेचार्थेचकामेचमोक्षेचभरतर्षभेति भारतोक्तेर्धर्मादेश्चकौरवधर्मादेश्च ज्ञानमुपादानप-रित्यागांगभूतंफलंतेनदृष्टार्थमेवश्रवणमित्युक्तं तदपिशूद्रमात्रपरंज्ञेयं द्विजानांतुपाठएवज्ञानार्थः यद्वास्तुद्विजा-नांश्रवणंदृष्टार्थंपाठश्रवणयोरन्यतरस्यापिज्ञानार्थत्वेनियामकाभावात् मंत्रपाठस्तुभविष्यवचनादेवेतिज्ञेयं अन्यथा श्रावयेदित्यस्यशूद्रमात्रपरत्वे शूद्रस्य तदनादरश्रवणादित्युत्तरमीमांसान्यायेन मोक्षेतस्यानधिकारात्मोक्षग्रहणं

विरुध्येत नन्वाद्यपक्षे श्रवणविधौशूद्रेज्ञानार्थत्वेनदृष्टार्थत्वान्नियमविधिः द्विजेचफलार्थत्वादपूर्वविधिरितिवैरूप्यं स्यात्मैवं ॥ अध्ययनविधिवद्यच्छक्यतइत्युपबंधेन सर्वग्रहात्सर्वत्रापूर्वविधिस्तत्वं फलतोनियमादिव्यपदेशइ-तिवार्तिकोक्तरीत्यापरिहाराच्च सर्वश्चाध्ययनविधिन्यायस्तत्स्थानापन्नेश्रवणविधौसंचारणीयः एतच्चएवंभारतादि-वाक्यान्यपियोज्यानीत्यादिनावार्तिकेपिसूचितं तदिदंमदुक्तंसुधीभिर्दूरंविभावनीयं ॥ तस्माच्छूद्रस्यपूर्तादिकर्मसु पौराणमंत्राणामेवविप्रस्यपाठोनवैदिकानामितिसिद्धं ॥ अथशूद्रस्यकर्माधिकारः ॥ तत्रकामश्रुतयोयथाध्ययनवि-

---

१ विधिरत्यन्तमप्राप्तौनियमः पाक्षिकेसति । तत्र चान्यत्रचप्राप्तौपरिसंख्यानिगद्यते ॥ अथ विधिःकः यःशब्दः कर्तव्यताबोधकोऽ-ग्निहोत्रंजुहुयात्स्वर्गकामइति । नह्यग्निहोत्रस्यैतद्वचनमन्तरेणान्यतः कुतश्चित्कर्तव्यतावगमः । नियमःपुनर्यत्रादृष्टसिद्ध्यर्थस्य वचनमन्तरेण पाक्षिकीप्राप्तिर्यथासमेयजेतेति दर्शपूर्णमासादियागविधानाद्देशमात्रमाक्षिप्तम् । नहिकश्चिद्देशमनाश्रित्य यागप्रयोगःसंभवति । द्विविधश्चदे-शःसमोविषमश्च । तत्रयदातावत्समेयजेत तदैतद्वचनमनुवादएव । यदात्विच्छायानिरंकुशत्वाद्विषमेयियक्षति तदैतद्वचनंसमदेशंविदधदर्थव-त् । विहितेसमेविषमस्यानाश्रयणमविधानात् । एतत्सामर्थ्यात्तन्निवृत्तिः । विधिनिबंधनेह्यनुष्ठानेकिमित्यविहितंक्रियते तत्करणेहिनयथाचो-दितानुष्ठानसिद्धिः ॥



धिसिद्धविद्यद्विजपराइतिनशूद्रस्यविद्याक्षेपेणश्रौतकर्माधिकारः तथास्मार्तपौराणाः ग्रहयज्ञमहादानपूर्तश्राद्धादि-विधयः फलकामित्वाच्छ्रवणविधिसिद्धविद्यत्वाच्चचतुर्वर्णपराइतिशूद्रस्यापितेष्वधिकारः नम्लेच्छादीनांविद्या-क्षेपाभावात् नन्वेवंतंत्रोक्तमहारुद्रलक्षहोमादिष्वप्यधिकारः शूद्रस्यस्यादितिचेन्नतत्रवैदिकमंत्राणामंगत्वेनशूद्र-स्यसर्वांगोपसंहाराभावेनाधादीनामिवानधिकारात् सर्वांगोपसंहारेणहिप्रधानविधिप्रवृत्तिरितिषष्ठेवर्णितंकथंत-र्हि शूद्रस्यवैदिकमंत्रयुक्तेगृह्योक्तहोमांगकुशकंडिकाक्षेपेचतुलादावधिकारः ॥ उच्यते ॥ न्यायतोनिषिद्धोप्यधि-कारः कर्मविशेषेषुतत्तद्वचनैःप्रतिप्रसूयते निषादस्थपतेरिवरौद्रेष्टौ नचशूद्रस्यगृह्योक्तांगज्ञानाभावेत्र्यंशभावना-ज्ञानाभावादनधिकारः वेदानधीत्यवेदौवावेदंवापियथाक्रमामितिस्मृतेरेकवेदाध्ययनपक्षेवेदांतरीयहौत्रौद्गात्रादि-कस्यैवश्रवणोपदेशादिनातद्विसंभवादार्त्विजत्वाद्वानियमानपेक्षणात् नियमस्तुप्रधानमात्रे उक्तंचैतत्सविस्तरं दानकमलाकरेस्माभिः ॥ अत्रापिचवक्ष्यते ॥ यत्रतुनवैदिकमंत्रोंगं तत्रतुवचनाभावेप्यधिकारः श्रवणविधिसि-द्धज्ञानत्वात्कामित्वाच्च यथाविनायकशांत्यादौयत्रवामंत्रांतरविकल्पःयथा ग्रहयज्ञेस्मृतिसंग्रहेनाममंत्रेणशूद्रस्य कुर्याद्धोमादिकंबुधइति तत्रवैकल्पिकमंत्रांतरेणापिसर्वांगोपसंहारात् सोयंकुत्रास्तिकुत्रनास्तीतिविविच्यते त-

त्रादौ।विहितानिअगस्त्यसंहितायां शुचिव्रततमाःशूद्राधार्मिकाद्विजसेवकाः।स्त्रियःपतिव्रताश्चान्येप्रतिलोमानुलो-मजाः॥ लोकाश्चांडालपर्यंतंसर्वेप्यत्राधिकारिणः॥अत्ररामंत्रे तथा श्रुतिर्ब्रह्माहषड्वर्णस्मृतिर्वर्णद्वयात्मकं ॥ षड्व-र्णब्राह्मणादीनांत्रयाणांयद्विवर्णकं॥तदन्येषांदैशिकेनवक्तव्यंतारकंपरं॥तत्रैव मंत्रोयमुपदेष्टव्योब्राह्मणाद्यनुरूपतः॥ ब्रह्मोत्तरखंडेशिवपंचाक्षरंप्रक्रम्य महापातकदावाग्निःसोयंमंत्रःषडक्षरः॥ प्रणवेनविनामंत्रःसोयंपंचाक्षरोमतः॥स्त्री-भिःशूद्रैश्चसंकीर्णैर्धार्यतेमुक्तिकांक्षिभिः॥नास्यदीक्षानहोमश्चनसंस्कारोनतर्पणं॥नकालनियमश्चात्रजप्यःसर्वैरयंमं-नुः एतद्दीक्षातत्रैवपरकृतिरूपेणोक्ता पुण्यतीर्थजलेस्नातंराजानंसमुपोषितं॥प्राङ्मुखंचोपविश्याग्रेनत्वाशिवपदांबुजं

---

१ भुंक्ते भुक्ते पतौ या तु स्वासीना चाधिवासिते । विनिद्रिते विनिद्राति सा स्त्री ज्ञेया पतिव्रता ॥ २ आयोगवश्च क्षत्ता च चंडाल-श्चाधमो नृणाम् । प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः ॥ वैश्यान्मागधवैदेहो क्षत्रियात्सूत एव तु । प्रतीपमेते जायन्ते परेऽप्यपसदास्त्रय इति मनुवचनाभ्यामायोगवक्षत्तृचंडालमागधवैदेहसूताः प्रतिलोमजाः ॥ विप्रान्मूर्धावसिक्तोहि क्षत्रियायांविशःस्त्रियाम् । जातोऽम्बष्ठस्तुशूद्रायां निषादःपारशवोऽपिवा ॥ वैश्याशूद्र्योस्तुराजन्यान्माहिष्योग्रौ स्मृतौ सुतौ । वैश्यात्तुकरणः शूद्र्यांविन्नास्वेष विधिःस्मृत इतियाज्ञवल्क्यस्मृ-तेर्मूर्धावसिक्तांबष्ठनिषादमाहिष्योग्रकरणा अनुलोमजाः ॥ ३ मनुर्मंत्रः ॥



तन्मस्तकेकरंन्यस्यददौमंत्रंशिवात्मकमितिस्मृतिकौमुद्यांवाराहेब्राह्मणक्षत्रियविशांपंचरात्रंविधीयते ॥ शूद्रादीनां चतच्छ्रोत्रपदवीमुपयास्यतीति।अन्यैस्तुनतच्छ्रोतेतिपाठोलिखितः अतएवाग्रेउक्तं अथशूद्रस्यवक्ष्यामिगदतः शृ-णुमाधवि दंपतीममभक्तौचममकर्मपरायणौ । नमस्कारप्रियोनित्यंममर्चिताव्यवस्थितः । शुद्धकर्माणिवैदेवियोनि-त्यंतुसमाचरेत् ।त्यक्त्वाऋषिसहस्राणिशूद्रमेवतुयाम्यहं । तथातत्रैव चातुर्वर्ण्यस्यवक्ष्यामिदीक्षामद्ययशस्विनीत्युप-क्रम्यद्विजानांदीक्षामुक्त्वाशूद्रस्यापिप्रवक्ष्यामिमद्भक्तस्य वरांगनेइत्यादिनाशूद्रदीक्षोक्ता वामनपुराणेततश्चकार भगवांश्चातुर्वर्ण्यहरार्चने इत्युक्त्वावसिष्ठपुत्रस्यशक्तेस्तच्छिष्यादीनांवाशिवदीक्षामुक्त्वाऊर्णोदरस्यशूद्रस्यदीक्षा-मुक्त्वोक्तं एवंसभगवान्ब्रह्मापूजनायशिवस्यतु । कृत्वातुचातुराश्रम्यंस्वमेवभवनंगतइतिभविष्येपि ब्राह्मणंक्षत्रियं वैश्यंकुलीनंशूद्रमेवच पुरुषंवास्त्रियंवापिदीक्षयेत्सूर्यमंडले एवंयत्राविशेषवचनंतत्रशूद्रस्याधिकारः स्मृतिकौमु-द्यांतु शूद्रादीनांचतच्छ्रोत्रपदवीमुपयास्यतीति वाराहे उक्त्वा पंचरात्रोक्तवैष्णवशैवसौरशाक्तवैनायकेषुमंत्रेष्व-धिकारउक्तः ॥ इतिमंत्रदीक्षा ॥ अथशूद्रस्यदेवस्थापनं ॥ कल्पतरौदेवीपुराणे वर्णाश्रमविभेदेनदेवाः स्था-प्यास्तुनान्यथा ब्रह्मातुब्राह्मणैःस्थाप्योगायत्रीसहितःप्रभुः चतुर्वर्णैस्तथा॥विष्णुःप्रतिष्ठाप्यःसुखार्थिभिः । भैरवोपि

चतुर्वर्णैरंत्यजानांतथामतः॥मातरःसर्वलोकैस्तुस्थाप्याःपूज्याःसुरोत्तमाः। लिंगंगृहीयतिर्वापिसंस्थाप्यतुयजेत्सदा॥ त्रिस्थलीसेतौ पितामहचरणास्तुदेवप्रतिष्ठायां शूद्रादीनांनाधिकारः स्त्रीणामनुपनीतानांशूद्राणांचनरेश्वर स्थापनेनाधिकारोस्तिविष्णोर्वाशंकरस्यच यःशूद्रसंस्कृतंलिंगंविष्णुंवापिनमेन्नरः इहैवात्यंतदुःखानिपश्यत्यामुष्मिकेकिमु शूद्रोवानुपनीतोवास्त्रियोवापतितोपिवा केशवंवाशिवंवापिस्पृष्ट्वानरकमश्नुते इतिबृहन्नारदीयेस्कांदाद्युक्तेरित्याहुः चतुर्वर्णैरितिपूर्ववचनाद्विष्ण्वादिप्रतिष्ठायांशूद्रस्यविकल्पइतितुयुक्तं अतएवस्पर्शनेनाधिकारोस्तीत्यन्यत्रपाठः ॥ ॥ अथशूद्रस्यदेवपूजा॥शिवसर्वस्वेभविष्ये यस्तुपूजयतेलिंगेदेवादिंमांजगत्पतिं ब्राह्मणःक्षत्रियोवैश्यःशूद्रोवामत्परायणः। तस्यप्रीतःप्रदास्यामिशुभाल्लोँकाननुत्तमान् गौडतिथितत्वेस्कांदे शूद्रःकर्माणियोनित्यंस्वीयानिकुरुतेप्रिये तस्याहमर्चांगृह्णामिचंद्रखंडविभूषिते ॥ लैंगे ॥ अथरुद्रोमहादेवोमंडलस्थउवाचह पूज्योहंब्राह्मणानांचक्षत्रियाणांविशेषतः ॥ वैश्यानांचैवशूद्राणांशुश्रूष्यःपूजकस्यच ॥ स्त्रीणांचैवाधिकारोस्तिपूजादिषुनसंशयः ॥ नृसिंहपुराणे ॥ ब्राह्मणाःक्षत्रियावैश्याः स्त्रियःशूद्रांत्यजातयः ॥ संपूज्यतंसुरश्रेष्ठंनरसिंहवपुर्धरं। मुच्यंतेचाशुभैर्भावैर्जन्मकोटिसमुद्भवैः। अपिपालधृतेतत्रैवपुराणे ॥ अयाचितप्रदातास्यात्कृषिंवृत्त्यर्थ-



माश्रयेत्। पुराणंशृणुयाद्विप्रान्नरसिंहस्यपूजनं ॥ सूतसंहितायां पंचाक्षरेण पूजामुक्त्वाह ब्रह्मचारी गृहस्थोवावानप्रस्थश्चसुव्रताः ॥ एवंदिनेदिनेदेवंपूजयेदंबिकापतिं ॥ नमोंतेनशिवेनैवस्त्रीणांपूजाविधीयते ॥ विरक्तानांचशूद्राणामेवंपूजाप्रकीर्तिता ॥ पंचाक्षरस्यश्रुतौनमआदित्वेपिस्त्रीशूद्रयोर्नमोंतत्वं ॥ अन्ये त्वंतेभिन्नंनमःशब्दमाहुः अन्येषामपिसर्वेषांनराणांमुनिपुंगवाः ॥ पूजादेवालयंदृष्ट्वाप्रणामस्तस्यकीर्तितः॥ एवंपूजाकृतायेनसफलंतस्यजीवितं ॥ यत्तुमनुः ॥ जपस्तपस्तीर्थसेवाप्रव्रज्यामंत्रसाधनं ॥ देवताराधनंचैवस्त्रीशूद्रपतनानिषडिति तद्विहितभिन्नपरंस्पर्शयुक्तपूजापरंवा ॥ एतच्चपुराणप्रसिद्धजीर्णलिंगपूजाविषयं यानितुत्रिस्थलीसेतौनारदीये ॥ यःशूद्रेणार्चितंलिंगंविष्णुंवाप्रणमेन्नरः ॥ नतस्यनिष्कृतिर्दृष्टाप्रायश्चित्तायुतैरपि ॥ नमेद्यःशूद्रसंस्पृष्टंशंकरंहरिमेववा ॥ ससर्वयातनाभोगीयावदाचंद्रतारकं ॥ पाखंडपूजितंलिंगंनत्वापाखंडतांव्रजेत् ॥ आभीरपूजितंलिंगंनत्वानरकमश्नुते ॥ योषिद्भिःपूजितंलिंगंविष्णुंवापिनमेत्तुयः ॥ सकोटिकुलसंयुक्तआकल्पंरौरवंवसेत् । इत्यादीनितानिनूतनस्थापितलिंगविषयाणि ॥ यदाप्रतिष्ठितंलिंगंमंत्रविद्भिर्यथाविधि ॥ तदाप्रभृतिशूद्रश्चयोषिद्वापिनसंस्पृशेदितितत्रैवोक्तेः ॥ अन्येतुजगदुः ॥ लिंगनमस्कर्त्तुर्दोषोस्तुशूद्रस्यपूजायांफलमस्त्येव ॥ नूतनलिंगार्चाशालग्रामादौतुस्पर्श-

रहितापूजाशूद्राद्यैःकार्या ॥ शूद्रोवानुपनीतोवास्त्रियोवापतितोपिवा ॥ केशवंवाशिवंवापिस्पृष्ट्वानरकमश्नुते ।
ब्राह्मण्यपिहरंविष्णुंनस्पृशेच्छ्रेयइच्छती ॥ यातुपूजयतेलिंगंविष्णुंवाशिवमेववा ॥ सनाथामृतनाथावातस्यानास्ती-
हनिष्कृतिः ॥ स्त्रीणामनुपनीतानांशूद्राणांचजनेश्वर ॥ स्पर्शनेनाधिकारोस्तिविष्णोर्वाशंकरस्यचेतिस्कांदोक्तेः ॥
चत्वारोब्राह्मणैःपूज्यास्त्रयोराजन्यजातिभिः ॥ वैश्यैर्द्वावेवसंपूज्यौतथैकः शूद्रजातिभिरितिस्कांदोक्तेः ॥ वाराहेतु
शालग्रामेस्पर्शनिषेधोनप्रतिमादावित्युक्तं ॥ शालग्रामंनस्पृशेत्तुहीनवर्णोवसुंधरे ॥ स्त्रीशूद्रकरसंस्पर्शोवज्रस्पर्शा-
धिकोमतः ॥ मोहाद्यःसंस्पृशेच्छूद्रोयोषिद्वापिकदाचन ॥ सपतेन्नरकेघोरेयावदाभूतसंप्लवं ॥ यदिभक्तिर्भवेत्तस्य
स्त्रीणांवापिवसुंधरे ॥ दूरादेवास्पृशन्पूजांकारयेत्सुसमाहितः ॥ सर्ववर्णैस्तुसंपूज्याः प्रतिमाःसर्वदेवताः ॥ लिंगान्य-
पितुपूज्यानिमणिभिः कल्पितास्तथेति विष्णुपुराणेपि ब्राह्मणःक्षत्रियोवैश्यःशूद्रश्चपृथिवीपते स्वधर्मतत्परोविष्णु-

१ ब्राह्मणैश्चत्वारः पूज्याः किंतु शिव एव तेषां पूज्यतमं दैवतम् ॥ अतः शिवपूजां कृत्वा तैर्देवतान्तरं पूजनीयम् ॥ विप्राणां दैवतं शंभुः क्षात्रियाणां तु माधवः । वैश्यानां तु भवेद्ब्रह्मा शूद्राणां गणनायक इति स्मृतेः ॥ ब्राह्मणादिभिः स्वां स्वां देवतामतिक्रम्य देवतान्तरं न पूजनीयम् ॥ यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान्भवतीति तैत्तिरीयश्रुतेः ॥

माराधयतिनान्यथा यत्तुप्रयोगपारिजातेविष्णुधर्मोत्तरे॥शालग्रामशिलांवापिचक्रांकितशिलांतथा॥ब्राह्मणःपूजये-
न्नित्यंक्षत्रियादिर्नपूजयेदितितत्स्पर्शसहितपूजापरं॥अदीक्षितपरमित्यन्ये॥ विशेषस्तुमत्कृतेपूर्त्तकमलाकरेनिर्णय-
सिंधौचज्ञेयः ॥ एवंपार्थिवलिंगपूजनेप्यधिकारः मृद्भस्मगोशकृत्पिष्टताम्रकांस्यमयंतुवा॥ कृत्वालिंगंसकृत्पूज्यव-
सेत्कल्पायुतंदिवीतितिथितत्त्वेभविष्योक्तेः ॥ वैदिकमंत्राभावाच्च तदुक्तंतत्रैवस्कांदे मृदाहरणसंघट्टेप्रतिष्ठाव्हा-
नमेवच ॥ स्थापनंपूजनंचैवविसर्जनमतःपरं ॥ हरोमहेश्वरश्चैवशूलपाणिःपिनाकधृक् ॥ पशुपतिःशिवश्चैवमहा-
देवइतिक्रमः ॥ भविष्ये शर्वायक्षितिमूर्तयेनमः भवायजलमूर्त्तयेनमः रुद्रायअग्निमूर्तयेनमः उग्रायवायुमूर्तये
नमः भीमायआकाशमूर्तयेनमः पशुपतयेयजमानमूर्तयेनमः महादेवायसोममूर्त्तयेनमः मूर्तयोष्टौभवस्यैताःपू-
ज्याःपूर्वादिताःक्रमात् । आग्नेय्यंतंप्रपूज्यास्तुवेद्यांलिंगेशिवंयजेत् । अत्रनप्राचीमग्रतःशंभोरितिरुद्रयामलेनिषेधा-
न्नांतरालंप्राचीकिंतुप्रसिद्धैव एवंनवरात्रेदेवीपूजादौ एवंचविंध्यवासिन्यांनवरात्रोपवासतइत्युपक्रम्य वैश्यैः
शूद्रैर्भक्तियुतैर्म्लेच्छैरन्यैश्चमानवैरितिहेमाद्रौभविष्योक्तेः ॥ एवंनानाम्लेच्छगणैःपूज्यतेसर्वदस्युभिः ॥ विनामं-

१ मुखबाहूरुपज्जानां या लोके जातयो बहिः । म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृता इति मनुः ॥

त्रैस्तामसस्त्रियातिकिरातानांतुसंमतेतिरूपनारायणीयभविष्योक्तेश्च ॥ तथाव्रतोपवासादावपिशूद्रस्याधिकारः श्रव-
णविधिसिद्धविद्यत्वाद्वैदिकमंत्राभावाच्च प्राच्यास्तु वैश्यशूद्रयोर्द्विरात्राधिकोपवासनिषेधः वैश्याःशूद्राश्चयेमो-
हादुपवासंप्रकुर्वते ॥ त्रिरात्रंपंचरात्रंवातेषांव्युंष्टिर्नविद्यते ॥ इतिहेमाद्रौभविष्योक्तेरित्याहुः ॥ तत्वंतु प्रक्रमा-
न्महातपोविषयोयंनिषेधइति नवरात्रेतुभवत्येवनवरात्रोपवासत इत्युक्त्वा ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैरन्यैश्चमान-
वैः ॥ स्त्रीभिश्चकुरुशार्दूलतद्विधानमिदंशृणु ॥ इतिभविष्येशूद्रस्याप्युक्तेः ॥ एवंप्रायश्चित्तंशूद्रेजपहोमरहितंदे-
यं ॥ तस्माच्छूद्रंसमासाद्यसदाधर्मपथेस्थितं ॥ प्रायश्चित्तंप्रदातव्यंजपहोमविवर्जितमितिमिताक्षरायामांगिरसो-
क्तेः अत्रजपहोमवर्ज्यप्रायश्चित्तदानतीर्थयात्रादौनशूद्रसंबंधविधेरुपसंहारः हविरुभयत्ववद्विशिष्टोद्देशेवाक्यभे-
दाद्विजानांतदभावापत्तेश्च किंतुशूद्रसंबंधिप्रायश्चित्तोद्देशेनजपहोमवर्ज्यत्वविधिलाघवात् ॥ अत्रकेचित्प्रधानभू-
तयोर्जपहोमयोर्निषेधोनत्वंगभूतयोः अतएवमहार्णवेलौकिकाग्नौस्त्रीशूद्रयोःप्रायश्चित्तांगव्याहृतिहोमोविप्रद्वा-
रोक्तइत्याहुः तन्न आरंभेसर्वकृच्छ्राणांसमाप्तौचविशेषतः ॥ आज्येनैवचशालाग्नौजुहुयाद्व्याहृतीः पृथक् ॥ श्राद्धं

१ भेदाः किरातशबरपुलिंदा म्लेच्छजातय इति कोशात् चंडालजात्यं तर्गता किराताख्याकाचिज्जातिः ॥ २ उपवासफलं न प्राप्यत इत्यर्थः ॥



कुर्याद्व्रतांतेतुगोहिरण्यादिदक्षिणं ॥ स्त्रीणांहोमोनकर्तव्यःपंचगव्यंतथैवचेतिजाबालिनागृह्याग्निनियमात् ॥ न-
चाग्नेःप्रतिनिधिरस्तीत्युक्तंनवमेनवालौकिकाग्नेर्वचनमस्तितेनाविशेषादुभयोर्निषेधः ॥ अतोमहादानेष्वप्यधिका-
रः ॥ तथाचहिरण्यगर्भदानेमात्स्येशूद्रस्यैकादशसंस्काराःस्त्रीणांचषट् नमोमंत्रश्चेतिमदनरत्नादिसर्वग्रंथाः ॥
महादानेषुमात्स्येपि ॥ स्त्रीणांकुंडानिविप्रेंद्रयोन्याकाराणिकारयेत् ॥ शारदातिलकेपि ॥ वैश्यानामर्धचंद्राभंशू-
द्राणांचत्रिकोणकमितिशूद्राणांकुंडोक्तेः ॥ स्त्रीशूद्रयोःसधर्मत्वाच्च ॥ अतएवमात्स्येहिरण्यगर्भे नरोवायदिवा
नारीसर्वंब्रह्मात्मसंभवं ॥ यःकरोतिमहापुण्यंशृणुतस्यापितत्फलमित्युक्तं ॥ कामधेनुदानेप्याग्नेये ॥ ब्रह्मविट्क्ष-
त्रशूद्राणांकर्तव्यायत्नतोनृपेति ॥ भविष्योत्तरेहलपंक्तिदानेपि ॥ प्रयत्नेनमहीपालदानमेतन्नृपोत्तम ॥ दातव्यं
भक्तियुक्तेनस्त्रियावापुरुषेणवा ॥ ब्रह्मांडेसप्तद्वीपदाने ॥ सप्तद्वीपाह्वयंदानमेवंकृत्वातुमानवः ॥ नारीवापुरुषो

१ न स्वामित्वस्य भार्यायाः पुत्रस्यदेशस्यकालस्याग्नेर्देवतायाः कर्मणः शब्दस्यच प्रतिनिधिर्विद्यत इति सत्याषाढसूत्रेप्यग्निप्रतिनि-
धिप्रतिषेधः ।

वापिवैरिंचंलोकमाप्नुयात् ॥ धान्यपर्वतेपि ॥ दिव्यंविमानमारुह्यनारीवापुरुषोपिवा ॥ तत्रैवकार्पासाचलेपि ॥
इत्युच्चार्यनरोदद्यान्नारीवाविधिपूर्वकं ॥ तिलपर्वतेपि ॥ पुण्यक्षयादिहागत्यराजाभवतिधार्मिकः ॥ नारीवातस्य
पत्नीचसुभगारूपसंयुता ॥ तथा मांधात्रायुवनाश्वेनकार्तवीर्येणचैवहि ॥ दानमेतत्पुरादत्तंतत्पत्नीभिस्तथैवच ।
नचवचनात्तावन्मात्रेधिकारः अनुवादेनफलार्थत्वात् ॥ यद्यपिनरेंद्रेत्यादिसामान्यस्यविद्वद्विषयत्वाद्द्विजपरत्व-
मेवार्हं तथापि क्वचिच्चतुर्वर्णग्रहणात्क्वचिच्छूद्रस्यक्वचिच्चस्त्रियाःपरामर्शः ॥ स्त्रीशूद्रयोःसमानधर्मत्वाच्छ्रवण-
विधिसिद्धविद्यत्वात्कामित्वाच्चशूद्रःस्याप्यधिकारः तदुक्तं अधिकारीभवेच्छूद्रःपूर्त्तधर्मे नवैदिकइति मोक्षधर्मे-
पि ॥ मंत्रवर्जंनदुष्यंतिकुर्वाणाःपौष्टिकींक्रियामिति ॥ पंचगव्येतुस्त्रीणांविकल्पः ॥ स्त्रीशूद्रस्यविशुद्ध्यर्थंप्राजा-
पत्यंसमादिशेत् ॥ पंचगव्यंतुकुर्वीतस्नात्वापीत्वाशुचिर्भवेदितिपराशरोक्तेः ॥ शूद्रेतुननिषेधः ॥ यत्त्वात्रिः ॥ पं-
चगव्यं पिबेच्छूद्रो ब्राह्मणस्तुसुरांपिबेत् ॥ उभौतौतुल्यकर्माणौ पुमाख्येनरकेवसेदितितत्प्रायश्चित्तंविनाज्ञे-
यं ॥ विशेषःप्रायश्चित्तरत्नेज्ञेयः एवंपूर्तेपि जलाशयोत्सर्गप्रासादप्रतिष्ठामहादानादिष्वपिशूद्रस्याधिकारः ॥

१ ब्रह्मलोकमित्यर्थः ।

अधिकारीभवेच्छूद्रःपूर्तेधर्मे नवैदिकइतिव्यासजातूकर्ण्योक्तेः ॥ पूर्तमाह हेमाद्रौमदनरत्नेचजातूकर्ण्यः ॥ वापी-
कूपतडागादिदेवतायतनानिच ॥ अन्नप्रदानमारामःपूर्तमित्यभिधीयते ॥ तत्रैवनारदः ग्रहोपरागेयद्दानंसूर्यसंक्र-
मणेषुच ॥ द्वादश्यादौचयद्दानंतदेतत्पूर्तमुच्यते ॥ शंखः ॥ रोगिणांपरिचर्याचपूर्तमित्यभिधीयते ॥ तत्रैवस्मृत्यं-
तरे ॥ ग्रहोपरागेयद्दानंसूर्यसंक्रमणेषुच ॥ बहिर्वेद्यांचयद्दानंतत्पौर्तिकमुदाहृतं ॥ तेनकर्मविपाकेनदानादावप्य-
धिकारः ॥ मनुः ॥ दानधर्मंनिषेवेतनित्यमैष्टिकपौर्तिकं ॥ श्रौतस्मार्ताग्निकर्मांगंदानमिष्टंतुपौर्तिकं ॥ व्यासोपि ॥
वर्णानामाश्रमाणांचचातुर्वर्ण्येयुधिष्ठिर ॥ दानंधर्मंप्रवक्ष्यामियथाव्यासेनभाषितं ॥ विशेषस्तु मत्कृतेदानकमला-
करेज्ञेयः ॥ अत्रयत्रमहादानजलाशयोत्सर्गादौवैदिकमंत्रयुक्तेवचनाद्रथकारस्येवाधानादाववधिकारः शूद्रस्योक्तः
तत्रद्वयीगतिः वैदिकमंत्ररहितंविप्रैः कार्यमित्येकःपक्षः मंत्रवर्जंनदुष्यतिकुर्वाणाः पौष्टिकींक्रियामितिमोक्षधर्मेषु
व्यासोक्तेः ॥ मनुरपि धर्मेप्सवस्तुधर्मज्ञाः सतांधर्ममनुव्रताः ॥ मंत्रवर्जंनदुष्यंतिप्रशंसांप्राप्नुवंतिच ॥ य-
त्तुमेधातिथिनोक्तंयानिमंत्ररहितानिव्रतोपवासादीनितान्यनुतिष्ठंतः शूद्रानदुष्यंतिनपुनः समंत्राण्यपिमंत्रवर्जे-

१ चंद्रग्रहणे सूर्यग्रहणे च ।

मनुतिष्ठंतोनदुष्यंतीति समंत्रकविधौशूद्रान्प्रत्यप्रवृत्तत्वेनमंत्रवर्जानुष्ठानेशब्दमनुष्ठानंस्यादिति तन्न ॥ स्थपतीष्टिवच्छूंगग्राहिकयाविधानेमंत्रवर्जताविधानात् ॥ अन्यथामंत्रहीनेव्रतोपवासादावनधिकारप्रसक्त्याविधिवैयर्थ्यात् ॥ तस्मात्सन्निधानार्थमेवैतत् ॥ अन्येत्वाहुःविप्रैर्वैदिकमंत्रैणैवहोमादिकार्यं ॥ वक्ष्यमाणपराशरोक्तेःमाधवीयेप्येवं ॥ पौराणमंत्रेष्वाचार्यकर्तृकेषुपाठएव ॥ यजमानेषुपाठएवेतिकल्पतरुस्मार्तगौडादयः ॥ युक्तंतुश्रवणविधिवशात्तेषांश्रवणमात्रंउक्तयुक्तेः श्रवणजन्यज्ञानस्यैवांगत्वात् ॥ वैदिकेतुयजमानेनमस्कारमात्रं ॥ अनुमतोस्यनमस्कारोमंत्रइतिगौतमोक्तेः ॥ गौडामैथिलाश्चैवं ॥ एवमुभयतोमुखीदानेनमोमंत्रेणहोमः यज्ञोवैनमइतिश्रुतेश्च अस्येतिषष्ठीश्रुत्यायजमानस्ययाज्येतिवत्तत्संबंधित्वात्पौराणोविप्रस्य अमंत्रस्यतुशूद्रस्य विप्रोमंत्रेणगृह्यतइतिपूर्वोक्तवाराहोक्तेः ॥ यत्तुसमंत्रकहोमस्यपुत्रप्रतिग्रहांगत्वाद्दयाहृत्यादिमंत्रपाठेचस्त्रीशूद्रयोरनधिकारात्तयोर्दत्तकः पुत्रोनभवत्येवेतिशुद्धिविवेकेरुद्रधरेणोक्तं तन्नभर्त्रनुज्ञयास्त्रियाअपिप्रतिग्रहोक्तेः तदाहवसिष्ठः ॥ नस्त्रीपुत्रंदद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्तुरिति इदंतज्जीवने तदूर्ध्वंतुस्वातंत्र्यान्नानुज्ञापेक्षा

१ उभयतोमुखीलक्षणमुक्तं याज्ञवल्क्येन यावद्वत्सस्य पादौद्वौ मुखं योन्यांच दृश्यते। तावद्गौः पृथिवी ज्ञेया यावद्गर्भंनमुञ्चतीति ॥



यद्यपि मेधातिथिनाभार्यात्ववद्दृष्टरूपंदत्तकत्वंहोमसाध्यमुक्तं स्त्रियाश्चहोमासंभवस्तथापिव्रतादिवद्विप्रद्वाराहोमादिकारयेदितिहरिनाथादयः ॥ गौडनिबंधतत्वेप्येवं ॥ एवंशूद्रस्याद्भुतरोगशांतिकर्मविपाकतुलादावपिस्त्रीशूद्राश्चसधर्माणइतिस्मृतेः ॥ अतएवशूद्रकर्तृकहोमोविप्रद्वारैवपराशरेणोक्तः ॥ दक्षिणार्थंतुयोविप्रःशूद्रस्यजुहुयाद्धविः ॥ ब्राह्मणस्तुभवेच्छूद्रःशूद्रस्तुब्राह्मणोभवेत्इति ॥ अत्रमाधवाचार्यः ॥ योविप्रः शूद्रदक्षिणामादाय तदीयंहविः शांतिपुष्ट्यादिसिद्धयेवैदिकैर्मंत्रैर्जुहोतितत्रविप्रस्यैवदोषः शूद्रस्तुहोमफलंलभेतैवेतिव्याचचक्षेएतच्चास्माभिर्निर्णयसिंधौसविस्तरमुक्तं ॥ तेनसर्वत्रशूद्राणांवैदिकतंत्रहोमेद्वौपक्षौ ॥ विप्रद्वारासमंत्रकअमंत्रको नाम्नाचेति ॥ ॥ अथशूद्रस्यसंस्काराः ॥ यमः ॥ शूद्रोप्येवंविधःकार्योविनामंत्रेणसंस्कृतः ॥ नकेनचित्समसृजच्छन्दसातंप्रजापतिः। छंदसामंत्रेण। व्यासोपि गर्भाधानंपुंसवनंसीमंतोजातकर्मच ॥ नामक्रियानिष्क्रमोन्नप्राशनंवपनंक्रिया ॥ कर्णवेधोव्रतादेशोवेदारंभक्रियाविधिः ॥ केशांतःस्नानमुद्वाहोविवाहाग्निपरिग्रहः ॥ त्रेताग्निसंग्रहश्चैवसंस्काराः षोडशस्मृता इत्युक्त्वाह ॥ नवैताःकर्णवेधांतामंत्रवर्जंक्रियाःस्त्रियः॥ विवाहोमंत्रतस्तस्याः

१ चूडाकर्म। २ उपनयनम्। ३ समावर्तनम्। ४ अग्न्याधानम्।

शूद्रस्यामंत्रतोदश ॥ यत्तुस्मृतिकौमुद्यांमदनपालेनोक्तं ब्राह्मणक्षत्रियवैश्यानां गर्भाधानसमिंतजातकर्मनाम-
करणान्नप्राशनचूडोपनयनव्रतचर्याध्ययनसमावर्तनाविवाहयज्ञदानानि समानानीति सुमंतूक्तौ द्विजानामेवो-
क्तेर्विवाहमात्रं संस्कारं शूद्रोपि लभतां सदेति ब्राह्माच्च नशूद्रस्यजातकर्मादि एवंचौलाभावः चूडाकर्मद्वि-
जातीनांसर्वेषामेवधर्मतइतिमनूक्तेरिति तच्चिंत्यं ॥ सौमंतवचनस्योपनयनादिसाम्यार्थत्वादन्यथादानेप्यनधिका-
रापत्तेः ॥ मानवीयेचधर्मतइत्युक्तेः शूद्रेहोमादिनिषेधात् ॥ तदाहमनुः ॥ बैजिकैर्गार्भिकैर्होमैश्चूडामौंजी-
निबंधनैः ॥ बैजिकंगार्भिकंचैनोद्विजानामपमृज्यतइति अतएवमदनरत्नेहिरण्यगर्भदाने गर्भाधानंपुंसवनंसी-
मंतोन्नयनंतथा ॥ कुर्युर्हिरण्यगर्भस्य ततस्ते द्विजपुंगवा इत्युक्त्वा जातकर्मादिकाः कुर्यात्क्रियाः षोडशचापराः

---

१ उपलब्धमनुस्मृतिपुस्तकेषु गार्भैर्होमैर्जातकर्मचूडामौंजीनिबंधनैरित्येव पाठोदृश्यते ॥ गर्भेसंभूतेनार्याः क्रियन्ते गर्भवाग्रहीतुं गर्भ-
प्रयोजनकत्वाद्गार्भाः । नारी तत्रद्वारमात्रं प्रयोजकस्तुगर्भएव । अतस्तत्प्रयुक्तत्वाच्च तदर्था होमाः पुंसवनसीमन्तोन्नयनगर्भाधानानि । होम-
शब्द उपलक्षणार्थः कर्ममात्रस्य । यथैव गार्भैर्होमैरेवं जातकर्माख्येन संस्कारेण । एवंचौडेन ॥ चूडार्थः चौडः । मौञ्जीनिबंधनमुपनयनम् ॥
ऐत बीजेभवंबीजानिमित्तंवाबैजिकं गर्भेभःवंगर्भनिमित्तंवा गार्भिकमेनः पापमदृष्टं दुःखकारणं अपमृज्यते अपनुद्यते ॥



इत्यत्रमात्स्ये स्त्रियाजातकर्मनामकरणनिष्क्रमान्नप्राशनचूडाविवाहाः षट्संस्काराः शूद्राणांतुषडेतेपंचमहा-
यज्ञाश्चेत्येकादशेत्युक्तं ॥ रूपनारायणहरिहरभाष्ययोरप्येवं ॥ शूद्रस्योपनयनवर्जागर्भाधानादिविवाहांता
नवसंस्काराइतिजयपालः ॥ शार्ङ्गधरस्तु द्विजानांषोडशैवस्युःशूद्राणांद्वादशैवहि ॥ पंचैवमिश्रजातीनांसं
स्काराःकुलधर्मतः ॥ वेदव्रतोपनयनमहानाम्नीमहाव्रतं ॥ विनाद्वादशशूद्राणांसंस्कारानाममंत्रत इत्याह ॥
अपरार्कस्तु ॥ गर्भाधानमृतौ पुंसइत्यत्राह ॥ एतच्चातुर्वर्ण्यपरंनद्विजातिमात्रपरं तथासत्युपनयनंविधायवाच्यं
स्यादितितेनतन्मतेगर्भाधानपुंसवनसीमंतजातकर्मनामकरणनिष्क्रमान्नप्राशनचौलाख्या अष्टौ भवंति कल्प-
तरौब्राह्मेतुविवाहमात्रंसंस्कारंशूद्रोपिलभतांसदेत्युक्तं ॥ अत्रसदसच्छूद्रगोचरत्वेनदेशभेदाद्वाव्यवस्थेतितत्त्वं ॥
यत्तुमनुः ॥ नशूद्रेपातकंकिंचिन्नचसंस्कारमर्हतीति तदर्थमाहमेधातिथिः ॥ यत्सामान्यतोनिषिद्धंस्तेयानृ-
तादि नतदतिक्रमेस्यतथापापंयथाद्विजानां उपनयनरूपंसंस्कारंचनार्हतीति ॥ तेचतूष्णींकार्याःपूर्वोक्तयमाद्युक्तेरि-
तिदिक् ॥ शूद्रस्यचौलेचनपंचचूडतादिपक्षः तस्यगोत्रचिन्हत्वाच्छूद्रेचतदभावात् यद्यपितस्मादाहुःसर्वाः
प्रजाःकाश्यप्यइतिशतपथश्रुतेर्गोत्रनाशेतुकाश्यपइतिहेमाद्रौव्याघ्रपादोक्तेश्चकाश्यपंगोत्रमस्ति अतएवपिंडादि

निर्वपेद्धीरनामतोगोत्रतस्तथेति हेमाद्रौशूद्रश्राद्धेभविष्यवचनं तथापिश्राद्धे एवतत् नतुप्रवरप्राप्तौप्रमाणमस्ति
ऋष्यपत्यत्वाभावाच्च अतएवमनुना द्विजानांधर्मतइत्युक्तं अर्थप्राप्तं शूद्रस्यकेशवपनंतुनवार्यतइतिमेधातिथिः॥
तत्रचौलेविकल्पेनशूद्राणांसर्वमुंडनं शिखाधारणंवा शूद्रस्यानियताः केशवेशा इतिवसिष्ठोक्तेः॥ अतएवहारीतः
स्त्रीशूद्रौतुशिखांछित्वाक्रोधाद्वैराग्यतोपिवा ॥ प्राजापत्यंप्रकुर्यातांनिष्कृतिर्नान्यथाभवेदितितच्छूद्रेप्रायश्चित्तमाह
अतएवगौडस्त्रीणांविधवानांशिखादृश्यते॥ यत्तुपाद्मे नशिखीनोपवीतीस्यान्नोच्चरेत्संस्कृतांगिरं ॥ मध्यपत्रेनभुं-
जीतब्रह्मवृक्षस्यभामिनीइति तन्मुंडित्वपरिग्रहेपक्षेइतिदिक् विशेषस्तुमत्कृतेनिर्णयसिंधौज्ञेयः ॥ तथा शूद्रा-
णांपंचमहायज्ञाश्चभवंति ॥ भार्यारतःशुचिर्भृत्यभर्ताश्राद्धक्रियारतः ॥ नमस्कारेणमंत्रेणपंचयज्ञान्नहापयेदिति
याज्ञवल्क्योक्तेः ॥ एतच्चमिताक्षरायांस्पष्टं ॥ भारतेराजधर्मेषु तस्माच्छूद्रः पाकयज्ञैर्यजेताव्रतवान्स्वयं ॥ द-
क्षिणापाकयज्ञानांहिरण्यंतुविधीयते ॥ तेचवाजसनेयिशाखयाकार्याः॥शूद्रावाजसनेयिनइतिगौडनिबंधेदक्षोक्तेः॥



---

१ चूडाकर्म द्विजातीनां सर्वेषामेव धर्मत इति मनुवचनम् । २ ब्रह्मवृक्षः पलाशवृक्षः ।

हरिहरभाष्येविवाहप्रकरणेप्येवमुक्तं ॥ अन्यत्प्रयोगेव्यक्तीभविष्यतीतिसंक्षेपः ॥ ॥ इति श्रीजगद्गुरुनारा-
यणभट्टसूरिसूनुरामकृष्णभट्टात्मजकमलाकरकृतेशूद्रधर्मेशूद्रसंस्काराः ॥ ॥ अथ शूद्रश्राद्धनिर्णयः ॥
तत्रश्राद्धक्रियारतइतिप्रागुक्तेर्नित्यनैमित्तिककाम्येषुसिद्धोऽधिकारः ॥ एवंस्त्रीणां ॥ स्वभर्तृप्रभृतित्रिभ्यः स्वपि-
तृभ्यस्तथैवच ॥ विधवाकारयेच्छ्राद्धंयथाकालमतंद्रितेतिस्मृतिरत्नावल्यांमनूक्तेः ॥ तच्चश्राद्धंस्त्रीशूद्राणांमंत्रव-
र्जंतूष्णींभवति ॥ स्त्रीणाममंत्रकंश्राद्धंतथाशूद्रासुतस्यच ॥ प्राग्द्विजाश्चव्रतादेशात्तेचकुर्युस्तथैवतदितिहेमाद्रौ
मरीचिवचनात् ॥ अयमेवविधिः प्रोक्तः शूद्राणांमंत्रवर्जितः ॥ अमंत्रस्यतुशूद्रस्यविप्रोमंत्रेणगृह्यतइतिब्राह्मो-
क्तेश्च ॥ अत्रश्राद्धप्रकरणेपिपरिभाषात्वाच्छूद्रस्यस्नानदानादौसर्वत्रविप्रेणमंत्रपाठः कार्यः ॥ सोपिपौराणस्यैव
एवंस्त्रियाअपीतिशूलपाणिः॥ प्राग्द्विजाश्चेत्यचूडाः त्रिवर्षपरं ॥ अनुपेतोपिकुर्वीतमंत्रवत्पैतृमेधिकम् ॥ यद्यसौकृत-
चूडःस्याद्यदिस्याच्चत्रिवत्सरः ॥ इतिसुमंतूक्तेःस्मृत्यर्थसारे॥ अनुपनीताःस्त्रीशूद्राश्चश्राद्धमृत्विजाकारयेयुःस्वयं
वाऽमंत्रकंकुर्युः द्विजस्त्रियस्तुस्वयंसंकल्पमात्रंकृत्वावैदिकमंत्रयुक्तंसर्वंब्राह्मणद्वाराकारयेयुरितिप्रयोगपारिजातः॥
अतएवस्त्रीणामित्यकृतविवाहस्त्रीपरमितिहेमाद्रिराह ॥ अनुपनीतस्तुवैदिकमंत्रयुक्तंसर्वंस्वयमेवकुर्यात् ॥ विशे-

षस्तुनिर्णयसिंधौज्ञेयः ॥ शूद्रस्यतुसदाऽमश्राद्धमेव ॥ सदाचैवतुशूद्राणामामश्राद्धंविधीयते इतिसुमंतूक्तेः ॥ पृ-
थ्वीचंद्रोदयेमात्स्येपि ॥ एवंशूद्रोपिसामान्यंवृद्धिश्राद्धंचसर्वदा ॥ नमस्कारेणमंत्रेणकुर्यादामान्नवत्सदा ॥ तत्रै-
ववृद्धपराशरः ॥ आमान्नेनतुशूद्रस्यतूष्णींतुद्विजपूजनं ॥ आमश्राद्धंतुनिर्वाप्यसजातीनाशयेदथ ॥ सएव ॥ आ-
मंशूद्रस्यपकान्नंपक्कमुच्छिष्टमुच्यते ॥ तेनशूद्रगृहेपक्कहोमोनेतिकेचित् ॥ हेमाद्रौभविष्ये ॥ धर्मेप्सवस्तुधर्मज्ञा
यदिशूद्राःप्रकुर्वते ॥ अग्नौकरणमंत्रश्चनमस्कारोविधीयते ॥ अग्नयेकव्यवाहनायनमः ॥ सोमायपितृमतेनमइ-
त्ययंमंत्रः आवाहनादिकर्त्तव्यंयथाशूद्रेणतच्छृणु ॥ देवानांदेवनाम्नातुपितॄणांनामगोत्रतः ॥ पिंडादिनिर्वपेद्वीर
नामतोगोत्रतस्तथा ॥ शूद्राणांकाश्यपंगोत्रमितिहेमाद्रिः ॥ एवंतर्पणादिषुज्ञेयं ॥ येतु ऋष्यपत्यत्वाभावाच्छूद्रे
गोत्रमेवनास्तीत्याहुस्तेमूर्खाएव ॥ तत्रैवभविष्ये ॥ शूद्रस्तु गृहपाकेनतत्पिंडान्निर्वपेत्तथा ॥ सक्तुमूलंफलंतस्य
पायसंवाभवेत्स्मृतं ॥ तेनपक्कमुच्छिष्टमुच्यतेइत्येतद्विहितभिन्नपरं श्राद्धपरंवा शूद्रकर्तृकवैश्वदेवपरमिति-
स्मार्तगौडाः अन्यथासर्वत्रपक्कनिषेधादेवश्राद्धेप्यामसिद्धेः ॥ शूद्रस्यामविधिर्व्यर्थःस्यात् ॥ तेनश्राद्धेसर्वत्राम-

१ आपद्यनग्नौतीर्थेच चंद्रसूर्यग्रहेतथा । आमश्राद्धं द्विजैःकार्यंशूद्रेण च सदैवहीतिप्राचेतसोक्तिरपि ।



प्राप्तौपिंडेपायसादेःप्रतिप्रसवः ॥ देवताभ्यःपितृभ्यश्चेत्ययंवानमस्कारमंत्रइतिविज्ञानेश्वरमदनपालादयः ॥ हेमा-
द्रिस्तुशूद्रोप्यमंत्रवत्कुर्यादनेनविधिनाबुधइतिमात्स्येमंत्रनिषेधान्नाममंत्रेणेत्याह यच्चपृथ्वीचंद्रोदयेस्कांदे ॥
राजकार्येनियुक्तस्यबंधनिग्रहवर्तिनः ॥ व्यसनेषुचसर्वेषुश्राद्धंविप्रेणकारयेदिति ॥ तच्छूद्रेपितुल्यं ॥ किंतु श्रा-
द्धेशूद्रस्यनब्राह्मणःप्रतिनिधिः ॥ ब्राह्मणोहीनवर्णस्यनकुर्यादौर्ध्वदेहिकं ॥ शूद्रोपिवाब्राह्मणस्यविनापारसवात्क-
चित् इतितत्रैवपारस्करोक्तेः पारसवः ऊढशूद्रापुत्रः विष्णुपुराणे दानं च दद्याच्छूद्रोपिपाकयज्ञैर्यजेतवा ॥ पि-
त्र्यादिकंचयत्सर्वंशूद्रःकुर्वीततेनवै ॥ तेन पाकेन ॥ इदंकलीतरपरमितिस्मार्तगौडाः यत्तुभारतेराजधर्मेषु यवनाः
किरातागांधाराश्चीनाः शबरबर्बराः ॥ शकास्तुषाराः कंकाश्चपल्हवाश्चांध्रमद्रकाइत्युक्त्वा ब्रह्मक्षत्रप्रसूताश्चवै-
श्याः शूद्राश्चमानवाः ॥ कथंधर्मांश्चरिष्यंतिसर्वेविषयवासिनः इतिचोक्त्वा वेदधर्मक्रियाश्चैवतेषांधर्मोविधीयतेश्च ॥
पितृयज्ञास्तथाकूपाःप्रपाश्चशयनानिवा ॥ दानानिचयथाकालंद्विजेभ्योविसृजेत्सदा तथा ॥ दक्षिणासर्वयज्ञानांदा-
तव्याभूतिमिच्छता पाकयज्ञामहार्हाश्चकर्तव्याः सर्वदस्युभिरितिम्लेच्छादीनांश्राद्धविधानं तदपिसजातीयभो-
जनद्रव्यदानादिपरं ॥ विष्णूशनसौ नपक्कंभोजयेद्विद्वान्सच्छूद्रोपिकदाचन भोजयन्प्रत्यवायीस्यान्नचतस्यफ-

लंलभेत् यत्रापिद्विजानांपाकनियमः यथालघुहारीतः एकोद्दिष्टंतुकर्तव्यंपाकेनैवसदास्वयमिति यथावास्मृति-
दर्पणेगालवः मृताहंचसपिंडंचगयाश्राद्धंमहालयं आपन्नोपिनकुर्वीतश्राद्धमामेनकर्हिचिदिति लौगाक्षिः अन्ने-
नैवाब्दिकंकुर्याद्धेम्नावामेननक्वचिदिति तत्रापिशूद्रस्याममेव सदाचैवतुशूद्राणामामश्राद्धंविधीयतइतिसुमंतूक्तेः॥
शूद्रस्यदशपिंडाद्यामेनैवेतिहलायुधः तन्न पूर्ववचनैः पायसादेरपिविधानात् ॥ तच्चशूद्रकर्तृकमामश्राद्धमपराह्ण-
एव नतुद्विजवत्पूर्वाह्णे मध्यान्हात्परतोयस्तुकुतुपः समुदाहृतः आमश्राद्धंतुतत्रैवपितॄणांदत्तमक्षयमितिसुमंतूक्तेरि-
त्यपरार्केहेमाद्रौचोक्तं ॥ पुत्रजन्मानिहिरण्यश्राद्धमेव तदाह हेमाद्रौसंवर्तः पुत्रजन्मनिकुर्वीतश्राद्धंहेम्नैवबुद्धि-
मान् नपक्वेननचामेनकल्याणान्यभिकामयन् आमहेमश्राद्धादौविशेषस्तुमत्कृतेनिर्णयसिंधौज्ञेयः ॥ क्रियानिबं-
धेव्यासः हिरण्यमामश्राद्धीयंलब्धंयत्क्षत्रियादितः यथेष्टंविनियोज्यंस्याद्भुंजीयाद्ब्राह्मणान्स्वयम् विप्राल्लब्धंभुं-
जीयात्क्षत्रियादिलब्धेतुयथेष्टंविनियोगः तेनापिश्राद्धंवैश्वदेवादिनकार्यं देवोद्देशेनत्यक्तस्यदेवतांतरायत्यागायो-
गादितिदेवयाज्ञिकः शूद्रलब्धेतूक्तंतत्रैवषट्त्रिंशन्मते आमंशूद्रस्ययत्किंचिच्छ्राद्धिकंप्रतिगृह्यते ॥ तत्सर्वंभो-
जनायालंनित्यनैमित्तिकेनतु गौडशुद्धितत्त्वेंगिराः शूद्रवेश्मनिविप्रेणक्षीरंवायदिवादधि निवृत्तेन न भोक्तव्यंशू-



द्रान्नंतदपिस्मृतं शूद्राद्विप्रगृहेष्वन्नंप्रविष्टंतुसदाशुचि॥ पराशरःतावद्भवतिशूद्रान्नंयावन्नस्पृशातिद्विजः द्विजातिक-
संस्पृष्टंसर्वंतन्नविरुध्यते ॥ विष्णुपुराणे ॥ संप्रोक्षयित्वागृह्णीयाच्छूद्रान्नंगृहमागतं ॥ अंगिराः ॥ पात्रांतरगतं
ग्राह्यंदुग्धं स्वगृहमागतं तथा अनुपनीतस्त्रीशूद्रादेरुत्तरीयेनसव्यापसव्येज्ञेये तच्चोत्तरीयंवस्त्रोत्तरीयाभावेद्व्यंगु-
लंत्र्यंगुलंचतुरंगुलंवापरिमंडलं षण्णवत्यंगुलंदीर्घमितिजातूकर्ण्योक्तंज्ञेयं तदभावे उपरिवासोमात्रं ॥ अपसव्यं
क्रमाद्दत्त्वंकृत्वाकश्चित्सगोत्रज इतिब्राह्मोक्तेरिति मैथिलवाचस्पतिः॥ स्मृतिकौमुद्यांबौधायनः॥ शूद्राणामित्यु-
पक्रम्य उपवीतंवस्त्रविन्यासादिति ॥ शंखः॥ चतुर्भिर्दर्भपिंजूलैर्ब्राह्मणस्यपवित्रकं ॥ एकैकन्यूनमुद्दिष्टंवर्णेवर्णे
यथाक्रमं ॥ मंडलेतुशूद्रस्याभ्युक्षणंमतमित्यादिनिर्णयसिंधौज्ञेयं ॥ शूद्रस्यतिलकविधिरुक्तः पराशरपुराणे ॥
ऊर्ध्वपुंड्रंत्रिपुंड्रंचवर्तुलंचतुरस्त्रकं॥ अर्धचंद्रादिकंलिङ्गंवेदनिष्ठोनधारयेत् ॥ वेदनिष्ठइत्युक्तेः शूद्रेनुज्ञा ॥ मदन-
पारिजातेब्राह्मे ॥ उर्ध्वपुंड्रंद्विजः कुर्यात्क्षत्रियस्तुत्रिपुंड्रकं ॥ अर्धचंद्रंतुवैश्यश्चवर्तुलंशूद्रजातिषु ॥ विष्ण्वा-
श्वलायनौ ॥ शंखचक्राद्यंकनंचगीतनृत्यादिकंतथा ॥ एकजातेरयंधर्मोनजातुस्याद्द्विजन्मनः ॥ पुरुषार्थप्रबो-
धशिवसर्वस्वादौतुस्त्रीशूद्रयोर्विभूतिधारणमप्युक्तं॥ ॥ इति श्रीरामकृष्णभट्टात्मजकमलाकरभट्टकृतेशूद्रक-

मलाकरेशूद्रश्राद्धनिर्णयः ॥ ॥ अथ शूद्राणांविहितनिषिद्धधर्माः ॥ ॥ लघुपराशरः विक्रीणन्मद्यमांसादि त्वभक्ष्यस्यचभक्षणं ॥ कुर्वन्नगम्यागमनंशूद्रः पतितितत्क्षणात् ॥ कपिलाक्षीरपानेन ब्राह्मणीगमनेनच ॥ वेदाक्षरविचारेण शूद्रश्चांडालतांव्रजेत् ॥ यत्तुसएव लवणंमधुमद्यंचदाधितक्रंघृतंपयः ॥ नदुष्येच्छूद्रजातीनांकुर्यात्सर्वेषुविक्रयमिति तदापदिज्ञेयामिति स्मृतिकौमुदी ॥ असच्छूद्रपरमुक्तं ॥ एवमसच्छूद्राणांमद्यमांसभक्षणेपिनदोषो निषिद्धमांसंविना । अतःसुरापशूद्रसंसर्गेनदोषः ॥ पतितसंसर्गेहिसःनचायंतथा ॥ द्विजानांतुतन्निषेधात्पातित्यमितितत्संसर्गेशूद्रस्यदोषएव शूद्रस्य वर्जनेत्वभ्युदयः तदाहमनुः नमांसभक्षणेदोषोनमद्येनचमैथुने॥ प्रवृत्तिरेषाभूतानांनिवृत्तिस्तुमहाफलेति ॥ सच्छूद्रैर्वर्ज्यमेव ॥ यत्तुकालिकापुराणे ॥ विक्रयंसर्ववस्तूनांकुर्वन् शूद्रोनदोषभाक् ॥ मधुचर्मसुरांलाक्षांमुक्त्वामांसंचपंचममिति ॥ अत्रअनापदिमध्वादीनेषधइीतकल्पतरुः॥ पराशरपुराणेपि ॥ पिण्याकमासवस्तैलंगव्यंतक्रादिकंतथा ॥ शूद्रादेवतुसंग्राह्यंनाद्विजेभ्यः कदाचन ॥ स्कांदे प्रणभासखंडे ॥ नदर्भानुद्धरेच्छूद्रोनपिबेत्कापिलंपयः ॥ मध्यपत्रेनभुंजीतब्रह्मवृक्षस्यभामिनि ॥ नोच्चरेत्प्रणवंमंत्रं

१ ब्रह्मवै पर्णइति तैत्तिरीयश्रुतेर्ब्रह्मशब्देन पलाशवृक्षो ग्राह्यः ।



पुरोडाशंनभक्षयेत् ॥ नशिखीनोपवीतीस्यान्नोच्चरेत्संस्कृतांगिरं ॥ नपठेद्वेदवचनंत्रिषवंनहिसेवयेत् ॥ नमस्कारेण मंत्रेणक्रियासिद्धिर्भवेद्ध्रुवं ॥ निषिद्धाचरणंकुर्वन्पितृभिः सह मज्जति ॥ अन्यान्यपि निषिद्धानि मात्स्ये कलिधर्मेषु ॥ ततः प्रभृत्ययंलोकः सर्वोव्यापत्स्यतेभृशमित्युपक्रम्य ब्राह्मणाः शूद्रयोनिस्थाः शूद्रावैमंत्रयोनयः उपस्थास्यंतितान्विप्रान्वेदार्थमभिलिप्सवः ॥ लैंगेपि शूद्राणांमंत्रयोनिश्चसंबंधोब्राह्मणैःसह ॥ भवतीहकलौ तस्मिन्शयनासनभोजनैः ॥ राजानः शूद्रभूयिष्ठाब्राह्मणान्बाधयंतिते ॥ शूद्राश्चब्राह्मणाचाराः शूद्राचाराश्चब्राह्मणाः ॥ अक्षत्रियाश्चराजानोविप्राः शूद्रोपजीविनः॥ शूद्राभिवादिनः सर्वेब्राह्मणैरभिवंदिताः॥ आसनस्थान्द्विजान्दृष्ट्वानचलंत्यल्पचेतसः ॥ ताडयंति द्विजेंद्रांश्चशूद्रावैस्वल्पबुद्धयः ॥ आस्येनिधायवैहस्तंकर्णेशूद्रस्यवैद्विजाः ॥ नीचस्यचतदावाक्यंवदंतिविनयेनतु ॥ अधीयतेतथावेदान्शूद्राधर्मार्थकोविदाः ॥ यजंतेचाश्वमेधेनराजानः शूद्रयोनयः ॥ तस्मादायुर्बलंरूपंकलिंप्राप्यप्रहीयते ॥ तदात्वल्पेनकालेनसिद्धिंगच्छंतिमानवाः ॥ धन्या धर्मंचरिष्यंतियुगांतेसमुपस्थिते ॥ त्रेतायांवार्षिकोधर्मइत्युक्त्वातदह्नाप्राप्यतेकलौ ॥ कौर्मेप्येतेश्लोकाःपाठांतरयुताः ॥ कौर्मे ॥ शुक्लदंताजिनाख्याश्चमुंडाः काषायवाससः ॥ शूद्राधर्मंचरिष्यंतियुगांतेसमुपस्थिते ॥ ताडयंतिद्विजेंद्रां-

श्चशूद्राराजोपजीविनः ॥ उच्चासनस्थान्शूद्रांश्चद्विजमध्येपरंतप ॥ पुष्पैश्चभूषणैश्चैवतथान्यैर्मंडनैर्द्विजाः ॥ शू-
द्रानभ्यर्चयंत्यल्पश्रुतभाग्यबलान्विताः ॥ नप्रेक्षंतोर्चतश्चापिशूद्राद्विजवरान्नृप ॥ सेवावसरमालोक्यद्वारिति-
ष्ठंतिचद्विजाः ॥ वाहनस्थान्समावृत्यशूद्रान्शूद्रोपजीविनः ॥ सेवंतेब्राह्मणास्तांस्तुस्तुवंतिस्तुतीभिः कलौ ॥
अध्यापयंतिवैवेदान्शूद्रान्शूद्रोपजीविनः ॥ पठंतिवैदिकान्मंत्रान्नास्तिक्यंघोरमाश्रिताः ॥ अत्रतस्मादेवंनकुर्या-
दितिनिषिध्यते ॥ स्कांदकौर्मयोः कलिधर्मेषु यत्रोमाया नरोवक्तासंवादोनारदस्यतु ॥ तत्रबौद्धंचजैनंचशाक्तंशै-
वंचवैष्णवम् ॥ योगज्ञानमतंभ्रांतंविरुद्धंवेदशास्त्रतः ॥ वर्तिष्यंतेकलौब्रह्मस्तन्मतेनद्विजातयः ॥ स्त्रियः शूश्रुषणं
पत्युर्विप्राणांशूद्रजातयः ॥ पित्रोः पुत्राः परित्यज्यजपहोमादिसाधनं ॥ कुर्वंतेकाम्यकर्माणिदृष्टार्थानिपतंत्यधः ॥
लौकिकैर्नामभिर्गीतैर्देवताराधनंतुयत् ॥ शूद्रादीनामयंधर्मोनद्विजानांकदाचन ॥ शूद्राणांकृतकैर्गीतैर्देवताग्रेक-
लौयुगे ॥ नृत्यंकुर्वंतिविप्रायाअवज्ञायश्रुतीरितं ॥ गायंतिविधवागीतंश्रोतॄणामपिपापदाः ॥ विष्णुपुराणे ॥
अपहायनिजंकर्मकृष्णकृष्णेतिवादिनः ॥ तेहरेर्द्वेषिणः पापाधर्मार्थंजन्मयद्धरेः ॥ तत्रैव द्विजशुश्रूषयैवैषपाक-
यज्ञाधिकारवान् ॥ निजानतिचवैलोकान्शूद्रोधन्यतरस्ततः ॥ दानंचदद्याच्छूद्रोपिपाकयज्ञैर्यजेतच ॥ पित्र्या-



दिकंचवैसर्वंशूद्रः कुर्वीतवैनरः ॥ पाकयज्ञाः पंचमहायज्ञाः पाकशब्दस्यतंपाकेनमनसेत्यादौप्राशस्त्यार्थत्वात् ॥
यद्वायोस्मत्पाकतरइतिवदल्पार्थः ॥ मदनपारिजातेबृहस्पतिः ॥ शौचंब्राह्मणशुश्रूषासत्यमक्रोधएवच ॥ शू-
द्रकर्मतथामंत्रोनमस्कारोस्यचोदितः ॥ भारतेआनुशासनिकेपर्वणि ॥ दृष्ट्वापितामहःशूद्रमभिभूतंतुतामसैः ॥
द्विजशुश्रूषणंधर्मंशूद्राणांतुप्रयुक्तवान् ॥ नश्यंतितामसाभावाः शूद्रस्यद्विजभक्तितः ॥ द्विजशुश्रूषयाशूद्रः प-
रंश्रेयोधिगच्छति ॥ अहिंसकः शुभाचारोदेवताद्विजपूजकः ॥ शूद्रोधर्मफलैरिष्टैः स्वधर्मेणैवयुज्यते ॥ तथा
स्वाहाकारनमस्कारौमंत्रौशूद्रेविधीयतां ॥ ताभ्यांशूद्रः पाकयज्ञैर्यजेतब्रह्मवान्स्वयं ॥ ब्रह्ममंत्रः ॥ संचयांश्चन
कुर्वीतजातुशूद्रः कथंचन ॥ पापीयान्हिधनंलब्ध्वाबाधेतापिगरीयसः ॥ राज्ञावासमनुज्ञातः कामंकुर्वीतधर्मतः ॥
आपस्तंबः ॥ शुश्रूषाशूद्रस्येतरेषांवर्णानांपूर्वस्मिन्पूर्वस्मिन्निःश्रेयसं भूयः बौधायनः ॥ शूद्राणामार्याधिष्ठिता-
नांमासिमासिवपनमर्यवदाचमनकल्पउपवीतंवस्त्रविन्यासादि अर्योवैश्यः अर्यः स्वामिवैश्ययोरितिपाणि-
निः ॥ मनुरपि शूद्राणांमासिकंकार्यंवपनंन्यायवार्तिनां ॥ वैश्यवच्छौचकल्पश्चद्विजोच्छिष्टंचभोजनं ॥ शौचमा-
चमनंसूतसूतकंचैववैश्यवत् ॥ त्रिराचमनंपंचदशरात्रमाशौचमित्यर्थः ॥ यत्तुयाज्ञवल्क्यः ॥ शुध्येरन्स्त्रीचशू-

द्रश्चसकृत्स्पृष्टाभिरंततइति ॥ तदसच्छूद्रपरमितिमदनपालः अंततः तालुगाभिः ओष्ठोन्मार्जनघ्राणस्पर्शा-
दिकंतुस्त्रीशूद्रयोर्नभवतिइति ॥ त्रिः प्राश्यापोद्विरुन्मृज्यखान्यद्भिः समुपस्पृशेदितियाज्ञवल्क्येन त्रिःप्राशने
एवतदुक्तेरितिकेचित् ॥ अन्येतूपलक्षणत्वात्स्त्रीशूद्रयोरपिभवति ॥ अतएवस्त्रीचशूद्रश्चेति शूद्रेविशेषमात्रमु-
क्तमित्याहुः ॥ उच्छिष्टंभांडस्थः शेषः नतुभुक्तिपात्रस्थं ॥ नशूद्रायमतिंदद्यान्नोच्छिष्टंनहविः प्लुतमितिपूर्वो-
क्तेः ॥ ॥ अन्येतुयथाश्रुतमाहुः ॥ गौतमः ॥ शूद्रश्चतुर्थो वर्ण एकजातिस्तस्य सत्यमक्रोधः शौचमा-
चमनार्थे पादप्रक्षालनमेवैके श्राद्धकर्मभृत्यभरणंस्वदारवृत्तिरनुज्ञातोस्यनमस्कारोमंत्रः पाकयज्ञैः स्वयंयजे-
तेत्येकेइति ॥ पाकयज्ञैरष्टकादीभिःस्वयंयजेतनर्त्विगादिभिरितितद्भाष्ये स्वयमिति पत्नीत्यादिव्यावृत्त्यर्थमिति
लक्ष्मीधरः ॥ एकेत्युक्तेर्विप्रद्वारापिप्रतिष्ठादावुक्तत्वात् शक्तः स्वयमशक्तस्तुविप्रद्वारा ॥ सच्छूद्रः स्वयमस-
च्छूद्रोविप्रद्वारेतिजयपालः॥ हेमाद्रौभारते ॥ श्राद्धकर्मनयश्चैवसत्यमक्रोधएवच ॥ स्वेषुदारेषुसंतोषः शौचंनित्या-
नसूयता ॥ आत्मज्ञानंतितिक्षाचधर्मः साधारणोनृप ॥ चातुर्वर्ण्यस्येतिशेषः ॥ शूद्राणांपुराणश्रवणेनात्मज्ञानं ॥
श्रोतव्यइतिनियमस्तुद्विजपरइतिव्रतहेमाद्रिः ॥ भगवद्गीतासु ॥ मामुपाश्रुत्यकौंतेययेपिस्युःपापयोनयः ॥



स्त्रियोवैश्यास्तथाशूद्रास्तेपियांतिपरांगतिं ॥ हेमाद्रौविष्णुः ॥ क्षमाशौचंदमोदानमिंद्रियंसत्यसंयमौ ॥ आहिंसागुरु-
शुश्रूषातीर्थानुसरणंदया ॥ आर्जवंलोभशून्यत्वंदेवब्राह्मणपूजनं ॥ अनभ्यसूयाचतथाधर्मः सामान्यउच्यते ॥
तद्वृत्तिमाहतुर्मनुपराशरौ ॥ शुश्रूषैवतुशूद्रस्यधर्मोनिःश्रेयसःपरः ॥ शुचिरुत्कृष्टशुश्रूषुर्मृदुवागनहंकृतः ॥ ब्राह्म-
णोपाश्रयोनित्यमुत्कृष्टांजातिमश्नुते ॥ शूद्रस्तुवृत्तिमाकांक्षन्क्षत्रमाराधयेद्यदि ॥ धनिनंवाप्युपाराध्यवैश्यंशूद्रो
जिजीविषेत् ॥ स्वर्गार्थमुभयार्थंवाब्राह्मणानेवराधयेत् ॥ विप्रसेवैवशूद्रस्यविशिष्टंकर्मकीर्त्यते ॥ यदतोन्यद्धि
कुरुतेतद्भवत्यस्यनिष्फलं ॥ विप्रसेवांविनाकृतमपिस्नानदानाद्यकृतमित्यर्थः ॥ सेव्यंप्रत्याह प्रकल्प्यातस्यतै-
र्वृत्तिः स्वकुटुंबाद्यथार्हतः ॥ शक्तिंचापेक्ष्यदाक्ष्यंचभृत्यानांपरिसंग्रहे ॥ तैर्द्विजैः पुत्रवदसौपालनीयइतिमेधा-
तिथिः ॥ उच्छिष्टमन्नंदातव्यंजीर्णानिवसनानिच ॥ पुलकाश्चैवधान्यानांजीर्णाश्चैवपरिच्छदाः ॥ पुलकाधा-
न्यकणाः ॥ उच्छिष्टंभुक्तशिष्टं भांडस्थमितिमेधातिथिः ॥ गौतमः ॥ तेभ्योवृत्तिंविलिप्सेतजीर्णान्युपानच्छत्र-
वासःकूर्चादीन्युच्छिष्टाशनं शिल्पंवृत्तिश्चयद्यर्यमाश्रयेद्भर्त्तव्यस्तेनक्षीणोपिशूद्रेणचोत्तरस्तदर्थोस्यनिचयः स्या-
दिति ॥ क्षीणोवृत्तिहीनस्तेनार्येणभर्तव्यस्तेनशूद्रेणचोत्तरअर्योभर्तव्यइत्यर्थः ॥ उच्छिष्टदानंदासपरं ॥ अन्ये

तु उच्छिष्टमन्नंदातव्यंशूद्रायागृहमेधिने ॥ गृहस्थायतुदातव्यमन्नमेवदिनेदिनेइतिव्याघोक्तेरुच्छिष्टनिषेधोगृ-
हस्थपरइत्याहुः ॥ मदनरत्नेप्येवं ॥ तथातपः शूद्रस्यसेवनं ॥ याज्ञवल्क्यः ॥ शूद्रस्याद्विजशुश्रूषातयाजीवन्व-
णिक्भवेत् ॥ शिल्पैर्वाविविधैर्जीवेद्द्विजातिहितमाचरन् ॥ नृसिंहपुराणे ॥ अयाचितप्रदातास्यात्कृषिंवृत्त्यर्थ-
माश्रयेत् ॥ पुराणंशृणुयान्नित्यंनरसिंहस्यपूजनं ॥ उशनाः ॥ शूद्रस्यद्विजशुश्रूषासर्वशिल्पानिचाप्यथ ॥
विक्रयः सर्वपुण्यानां शूद्रधर्म उदाहृतः ॥ देवलः शूद्रधर्मस्त्रिवर्णशुश्रूषा कलत्रादिपोषणकर्षणपशुपालन-
भारोद्वहनपण्यव्यवहारचित्रकर्मनृत्यगीतवेणुमृदंगवादनानीति ॥ मनुः ॥ अशक्नुवंस्तुशुश्रूषांशूद्रः कर्तुंद्विज-
न्मनां ॥ पुत्रदारात्ययेप्राप्तेजीवेत्कारुककर्मभिः ॥ यैः कर्मभिः प्रचरितैः शुश्रूष्येतद्विजातयः ॥ तानिकारुक-
कर्माणिशिल्पानिविविधानिच ॥ कुर्यादितिशेषः ॥ नृसिंहपुराणे ॥ दूराच्छूद्रेणोपचार्योब्राह्मणोग्निरिवज्वलन् ॥
एवंधर्माचरणेल्लोकमाहपैठीनसिः ॥ गांधर्वंशूद्रस्यस्थानमित्यर्थः ॥ ॥ इतिश्रीरामकृष्णभट्टसुतकमलाकरभट्ट-
कृतेशूद्रकमलाकरेशूद्राणांविहितनिषिद्धानि ॥ ॥ अथशूद्रस्यसंस्कारप्रयोगः ॥ ॥ तत्रादौसर्वकर्मांग-
त्वात्पुण्याहवाचनमाचारानुसारेणोच्यते व्यासः संपूज्यगंधमाल्याद्यैर्ब्राह्मणान्स्वस्तिवाचयेत् ॥ काम्यकर्मणि





मांगल्येसंग्रामाद्भुतदर्शने यमः ॐकारंब्राह्मणेकुर्यान्निरोंकारंमहीपतौ ॥ उपांशुचतथावैश्येस्वस्तिशूद्रेप्रकीर्त-
येत् ॥ कर्ताचम्य सुमुखश्चैकदंतश्चेत्यादिपठित्वाश्रुत्वावादेशकालौसंकीर्त्यअमुककर्मकरिष्येतदंगतयागणेशपू-
जनंपुण्याहवाचनंकरिष्येइतिसंकल्प्यगणेशंपूजयेत् तया हेहेरंबत्वमेह्येहिअंबिकात्र्यंबकात्मज ॥ सिद्धिबुद्धि-
युतत्र्यक्षसर्वलोकपितः पितः ॥ नागास्यनागहारत्वंगणनाथचतुर्भुज ॥ भूषितः स्वायुधैर्दिव्यैः पाशांकुशप
रश्वधैः ॥ आवाहयामिपूजार्थंरक्षार्थंचममक्रतोः॥इहागत्यगृहाणत्वंपूजांरक्षचमेक्रतुं ॥ इत्यावाह्यषोडशोपचारैः
संपूज्यपात्रेसफलमर्घ्यमादाय रक्षरक्षगणाध्यक्षत्र्यक्षत्रैलोक्यरक्षक ॥ भक्तानामभयंकर्त्तात्राताभवभवार्णवा
त् ॥ द्वैमातुरकृपासिंधोदेवषाण्मातुराग्रज ॥ वरदस्त्वंवरंदेहिवांछितार्थप्रदोभव ॥ अनेनफलदानेन
फलदोभवमेप्रभो इत्यर्घ्यंदत्वा वक्रतुंडमहाकायेतिप्रार्थयेत् ॥ यद्वा विघ्नेश्वरायवरदायसुरप्रियायलंबोदराय
सकलायजगद्धिताय ॥ नागाननायसितसर्पविभूषितायगौरीसुतायगणनाथनमोनमस्ते ॥ भक्तार्तिनाशनपराय
गणेश्वरायसर्वेश्वरायशुभदायसुरेश्वराय ॥ विद्याधरायविकटायचवामनायभक्तप्रसन्नवरदायनमोनमस्ते ॥ नमस्ते
ब्रह्मरूपायविष्णुरूपायतेनमः ॥ नमस्तेरुद्ररूपायकरिरूपायतेनमः ॥ इति प्रार्थना ॥ ततः स्वाग्रेधान्यराशिद्-

येकलशौसंस्थाप्य ॥ तत्रगंधदूर्वापंचपल्लवफलहेमपंचरत्नादिक्षिप्त्वाधान्यपूर्णपात्रद्वयंन्यस्य तत्र पाशहस्तंचव-
रुणमर्णसांपतिमीश्वरं ॥ आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतां ॥ इतिवरुणमावाह्यसंपूज्य ॥ कलशस्यमुखे
विष्णुरित्याद्यैः संप्रार्थ्य ॥ मातृदेवोभव पितृदेवोभव आचार्यदेवोभव अतिथिदेवोभव आशिषः प्रार्थयंते ॥ एताः
सत्याआशिषः संतु अवनिकृतजानुमंडलः कमलमुकुलसदृशमंजलिंशिरस्याधायदक्षिणेनपाणिनासुवर्णपूर्णकल-
शंधारयित्वा दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिचतेनायुष्प्रमाणेन पुण्याहंदीर्घमायुरस्तु शिवाआपः संतु
सौमनस्यमस्तु ॥ अक्षतंचारिष्टंचास्तु ॥ गंधाःपांतुसुमंगल्यंचास्तु ॥ अक्षताः पांत्वायुष्यमस्तु ॥ पुष्पाणिपांतुसौ-
श्रियमस्तु ॥ तांबूलानिपांत्वैश्वर्यमस्तु ॥ दक्षिणाः पांतुबहुदेयंचास्तुइतिविप्रहस्तेदत्वा यंकृत्वासर्ववेदयज्ञक्रि-
याकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्ततेतमहंनत्वाभवद्भिरनुज्ञातः पुण्यंपुण्याहंवाचयिष्ये वाच्यतामितितै-
रुक्ते माविघ्नंमाचमेपापंमासंतुपरिपंथिनः॥ सौम्याभवंतुसुखिनः सर्वेलोकाः सुखावहाः इतिकर्तावदेत् विप्रास्त-
थास्त्वित्युक्त्वा करोतुस्वस्तितेब्रह्मास्वस्तिवापिद्विजातयः॥ सरीसृपाश्चयेश्रेष्ठास्तेभ्यस्तेस्वस्तिसर्वदा ॥ ययातिर्न-
हुषश्चैवधुंधुमारोभगीरथः ॥ तुभ्यंराजर्षयःसर्वेस्वस्तिकुर्वंतुनित्यशः ॥ स्वस्तितेस्तुद्विपादेभ्यश्चतुष्पादेभ्यएवच ॥



स्वस्त्यस्त्वपादकेभ्यश्चसर्वेभ्यः स्वस्तिसर्वदा ॥ स्वाहास्वधाशचीचैवस्वस्तिकुर्वंतुतेसदा ॥ लक्ष्मीररुंधतीचैवकु-
रुतांस्वस्तितेनघ ॥ असितोदेवलश्चैवविश्वामित्रस्तथांगिराः ॥ स्वस्तितेचप्रयच्छंतुकार्तिकेयश्चषण्मुखः ॥ विव-
स्वान्भगवान्स्वस्तिकरोतुतवसर्वशः ॥ दिग्गजाश्चैवचत्वारः क्षितिश्चगगनंग्रहाः ॥ अधस्ताद्धरणींयोसौनागो
धारयतेसदा ॥ शेषश्चपन्नगश्रेष्ठः स्वस्तितुभ्यंप्रयच्छतु ॥ इतिवदेयुः ततः कर्ता ब्राह्मणा मनः समाधीयतां समा-
हितमनसः स्मइति ते प्रसीदंतुभवंतः प्रसन्नास्मः इत्युक्ते कुंभाज्जलंपातयन्वदेत् ॥शांतिरस्तु पुष्टिरस्तु तुष्टिरस्तु
वृद्धिरस्तु अविघ्नमस्तुआयुष्यमस्तुआरोग्यमस्तु शिवंकर्मास्तु कर्मसमृद्धिरस्तु पुत्रसमृद्धिर॰ धनधान्यसमृद्धि॰
इष्टसंपदस्तु अरिष्टनिरसनमस्तु यत्पापंतत्प्रातिहतमस्तु यच्छ्रेयस्तदस्तु उत्तरेकर्मण्याविघ्नमस्तुउत्तरोत्तरमहरहर-
भिवृद्धिरस्तु उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यंतां तिथिकरणमुहूर्तनक्षत्रसंपदस्तु तिथिकरणमुहूर्तनक्षत्रग्र-
हालग्नादिदेवताः प्रीयंतां दुर्गापांचाल्यौप्रीयेतां अग्निपुरोगा विश्वेदेवाः प्रीयंतां इंद्रपुरोगामरुद्गणाः॰ ब्रह्मपुरोगाः
सर्वेवेदाः प्री॰ वसिष्ठपुरोगाऋषिगणाः प्री॰ अरुंधतीपुरोगाएकपत्न्यः प्रीयं॰ ब्रह्मचब्राह्मणाश्चप्री॰ श्रीसर-
स्वत्यौप्रीयेतां श्रद्धामेधेप्रीयेतां भगवतीकात्यायनीप्रीयतां भगवतीमाहेश्वरीप्री॰ भगवतीपुष्टिकरीप्री॰ भग-

वतीतुष्टिकरीप्री० भगवतीवृद्धिकरीप्री० भगवतीऋद्धिकरीप्री० भगवंतौविघ्नविनायकौप्रीयेतां भगवान्स्वा-
मीमहासेनः सपत्नीकः ससुतः सपार्षदः सर्वस्थानगतः प्रीयतां हरिहरहिरण्यगर्भाः प्रीयतां सर्वाग्रामदेवताः०
सर्वाः कुलदेवताः प्री० सर्वाइष्टदेवताः प्री० हताब्रह्मद्विषः हताः परिपंथिनः हताअस्यकर्मणोविघ्न-
कर्तारः शत्रवः पराभवं यांतु शाम्यंतु घोराणि शाम्यंतुपापानि शाम्यंत्वीतयः शुभानिवर्धंतां शिवाआपः संतु
शिवाऋतवः संतु शिवाअग्नयः संतु शिवाओषधयः संतु शिवावनस्पतयः संतु शिवाअतिथयः संतु अहोरा-
त्रेशिवेस्यातां शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिताआदित्यपुरोगाः सर्वेग्रहाःप्रीयंतां भगवान्ना-
रायणः प्रीयतां भगवान्पर्जन्यः प्रीयतां भगवान्स्वामीमहासेनः प्रीयतां पुण्याहकालान्वाचयिष्ये वाच्यतां
ब्राह्मंपुण्यमहर्यच्च स्वस्त्युत्पादनकारकं वेदवृक्षोद्भवंनित्यंतत्पुण्याहंब्रुवंतुनः ॥ दीयंतेयत्रदानानिपूज्यंतेचद्विजा-
तयः ॥ दृश्यतेयत्रमांगल्यंतत्पुण्याहंसदास्तुमे॥ ममगृहेस्यकर्मणः पुण्याहंभवंतोब्रुवंतु ॥ स्वस्तिपुण्याहमितित्रि-
र्विप्राः ततः स्वातिर्याचाविताशाख्यापुण्यकल्याणवृद्धिदा विनायकप्रियानित्यंतांस्वस्तिंभोब्रुवंतुनः ॥ ममगृहे-
स्वस्तिंभवंतोब्रुवंतु आयुष्मतेस्वास्तिइतिविप्राः सागरस्यतुयाऋद्धिर्महालक्ष्म्यादिभिः कृता संपूर्णापूर्णचंद्रेयाता-



मृद्धिंभोब्रुवंतुनः ॥ ममगृहेऋद्धिंभवंतोब्रुवंतुऋध्यतामितित्रिः ॥ पृथिव्यामुद्धृतायांतुयत्कल्याणंपुराकृतं ॥ ऋ-
षिभिः सिद्धगंधर्वैस्तत्कल्याणंब्रुवंतुनः ॥ ममगृहेकल्याणंभवंतोब्रुवंतुकल्याणमितित्रिर्विप्राः ततःक्षीरोदाधिस-
मुद्भूतामथ्यमानेमहोदधौ ॥ विष्णोश्चैवप्रियानित्यंतांश्रियंभोब्रुवंतुनः ॥ ममगृहेश्रीरस्त्विति भवंतोब्रुवंतु अस्तुश्री-
रितितैरुक्ते वर्षशतंपूर्णमस्तु शिवमस्तु वंशाभिवृद्धिरस्तु प्रजापतिः प्रीयतां ॥ ततोविप्राः सुरास्त्वामभिषिंचंतु
ब्रह्मविष्णुमहेश्वराः॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते ॥ आखंड-
लोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ वरुणः पवनश्चैवधनाध्यक्षस्तथाशिव :॥ ब्रह्मणासहिताः सर्वेदिक्पालाः
पांतुतेसदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिः श्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशांतिः कांतिस्तुष्टिश्चमातरः ॥
एतास्त्वामाभिषिंचंतुदेवपत्न्यःसमागताः॥ आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः ॥ ग्रहास्त्वामभिषिंचंतुराहुः
केतुश्चतर्पिताः ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ऋषयोमुनयोगावोदेवमातरएवच ॥ देवपत्न्योद्रुमानागा
दैत्याश्चाप्सरसांगणाः॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच ॥ औषधानिचरत्नानिकालस्यावयवाश्चये ॥ स-
रितः सागराःशैलास्तीर्थानिजलदानदाः ॥ एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये ॥ इत्याद्यैः पूर्वोक्तैरभिषिं-

चेयुः ॥ तत्रपत्नीवामे ततः करोतुस्वस्तिब्रह्मेत्याद्यैः पूर्वोक्तैर्यजमानस्यनीराजनतिलकौ ॥ आशीर्वादश्चएवं सर्वत्र ॥ ॥ इतिकमलाकरभट्टकृतौशूद्रस्यपुण्याहवाचनं ॥ ततः कर्ता तंडुलपुंजेषु ॥ गौरीपद्माशचीमेधासावित्रीविजयाजया ॥ देवसेनास्वधास्वाहामातरोलोकमातरः॥ धृतिःपुष्टिस्तथातुष्टिरात्मनःकुलदेवताः ॥ गणेशेनाधिकाह्येतावृद्धौपूज्यास्तुषोडश॥ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ वाराहीचतथेंद्राणीचामुंडासप्तमातरइतिगणेशपूर्वकगौर्यादिषोडशब्राह्म्यादिसप्तचनामभिर्मातृरावाह्यकुड्येघृतेनपंचसप्तवाधाराःकृत्वा वसुधारायैनमइत्यावाह्यषोडशोपचारैःसंपूज्यनांदीश्राद्धंकुर्यात् यथासर्वैसव्येनदेवतीर्थेनयवैश्वपित्र्येपिमात्रादित्रयपित्रादित्रयमातामहादित्रयसंबंधिनांदीमुखसत्यवसुसंज्ञकविश्वेदेवस्थानेभवद्भ्यांक्षणः कर्तव्यःप्राप्नुतांभवंतौप्राप्नवावेतिद्वौविप्रौकुशचटौवादैवेनिधाय मातृपितामहीप्रपितामहीनाममुकदेवीनांदासीनामित्याचार्यचूडामणिःनांदीमुखानांस्थाने इत्यादिनाद्वौ पितृपितामहप्रपितामहानांनांदीमुखानांस्थानेइत्यादिनाद्वौ मातामहप्रमातामहवृद्धप्रमातामहानांसपत्नीकानांनांदीमुखानांस्थानेइत्यादिनाद्वौ ॥ कोकिलमतानुसारिणांतुमातृमातामहप्रमातामहा इतिमातामहेनसहमातुः श्राद्धं ॥ तदापार्वणद्वयमेव ॥ नात्रनामगोत्रेमूलंनिर्णयसिंधौज्ञेयं ॥ ततः सत्यवसुसंज्ञकाविश्वेदेवा इदंवः पाद्यं ॥ एषवोर्घः एवंमात्रादयः पित्रादयोः मातामहादयश्च इदंवः पाद्यं ॥ ततोः विश्वेदेवा इदमासनमास्यतांनमः एवंमात्रादौ अर्घ्यस्थानेसंकल्पसिद्धिरस्तु विश्वेदेवा एषवोगंधः एवंमात्रादौ ॥ एवंइमानिपुष्पाणि धूपः दीपः आच्छादनं एते अमुकेभ्यः गंधपुष्पधूपदीपाच्छादनांताः सर्वेउपचाराः संपूर्णा भवंतु ॥ ततोर्धचंद्रमंडलमभ्युक्षणंवाकृत्वापात्रेष्वामान्नानिद्विगुणानिसमानिवादत्वा प्रोक्ष्यपात्रमालभ्य यवान्विकीर्यन्नेंगुष्ठंदत्वा सत्यवसुसंज्ञकाविश्वेदेवा नांदीमुखा इदंवोः युग्मब्राह्मणभोजनपर्याप्तंद्विगुणमामंसोपस्करं आममूल्यभूतंयथाशक्तिहेमवासंप्रददेस्वाहानमः एवंमातृपितामहीप्रपितामह्यः नांदीमुख्यः इदंवः युग्मेत्यादि॰ पितृपितामहप्रपितामहाः नांदीमुखाः इदंवः युग्मेत्यादि एवंमातामहप्रमातामहवृद्धप्रमातामहसपत्नीकाः नांदीमुखाः इदंवः इत्यादि एवंमातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकानांदीमुखाइत्यादि अत्रपिंडाः कृताकृताः ॥ पिंडपक्षेवेदित्वापूर्वाग्रालेखाः तिस्रः कृत्वा दर्भानास्तीर्य मातर्नांदीमुखीं अवनेनिंक्ष्वेतिजलंदत्वा एवंपितामहीप्रपितामही॰ एवंपितः नांदीमुखेत्यादि ततः सक्तुउवेनवादधिबदरयवमिश्रान्पिंडान्कृत्वा एतत्तेमातर्नांदीमुखींएषतेपिंडः इदमन्नंवास्वाहानमःइत्येकंपिंडंदत्वापरंतूष्णींद्वितीयं एवमेकैकस्य

द्वौद्वौदत्वापुनः प्रत्यवनेनिंक्ष्वेतिप्रत्यवनेजनंप्राग्वद्दत्वाभ्यंजनांजनेवासांसिचदत्वाशेषमाघ्रायपात्रस्थंजलंपरिषि-
च्यशिवाआपः संत्वित्यादिकृत्वैतन्नांदीश्राद्धकमर्णः सांगतासिद्ध्यर्थंद्राक्षामलकयवाः तन्निष्क्रयद्रव्यंवादक्षिणां
तुभ्यंसंप्रददेस्वाहानमइतिप्रत्येकंदत्वातेननांदीश्राद्धेननांदीमुखदेवताः प्रीयंतां मातापितामहीचैवतथैवप्रपिताम-
ही ॥ पितापितामहश्चैवतथैवप्रपितामहः ॥ मातामहस्तत्पिताचप्रमातामहकादयः ॥ एतेभवंतुमेप्रीताः प्रयच्छं-
तुचमंगलमितिसंप्रार्थ्यपिंडान्विसृजेत् ॥ ॥ इतिवृद्धिश्राद्धं ॥ एतदंतंसर्वत्रसंस्कारेषुसमानं ॥ यत्रतुग्रहय-
ज्ञतुलादौऋत्विग्वरणंतत्राचाराच्छरावे ॥ आपः क्षीरंकुशाग्राणिदधिदूर्वाक्षतास्तथा ॥ सर्षपः कुंकुमंचेतिअर्घो-
ष्टांगः प्रकीर्तितइतिअष्टांगमर्घ्यंकृत्वापिधाय ॥ स्वागतंभोद्विजश्रेष्ठामदनुग्रहकारकाः ॥ इदमर्घ्यमिदंपाद्यंभ-
वाद्भिः प्रतिगृह्यतामितिपादार्घमाचारात्कृत्वाचार्यब्रह्मर्त्विग्वरणंकृत्वाब्राह्मणान्प्रार्थयेत् ॥ ब्राह्मणाः संतुमेशस्ताः
पापात्पांतुसमाहिताः ॥ वेदानांचैवदातारः पातारः सर्वदेहिनां ॥ जपयज्ञैस्तथाहोमैर्दानैश्चविविधैः पुनः ॥
देवानांचपितृणांचतृप्त्यर्थंयाजकाः कृताः ॥ येषांदेहेस्थितावेदाः पावयंतिजगत्त्रयं ॥ रक्षंतुसततंतेमांजपय-
ज्ञेव्यवस्थिताः ॥ ब्राह्मणाजंगमंतीर्थंत्रिषुलोकेषुविश्रुतं ॥ येषांवाक्योदकेनैव शुध्यंतिमलिनाजनाः ॥ पावनाः

सर्ववर्णानांब्राह्मणाब्रह्मरूपिणः ॥ सर्वकर्मरतानित्यंवेदशास्त्रार्थकोविदाः ॥ श्रोत्रियाः सत्यवाचश्चदेवध्यानरताः
सदा ॥ यद्वाक्यामृतसंसिक्ताऋद्धियांतिनरद्रुमाः ॥ अंगीकुर्वंतुकर्मैतत्कल्पद्रुमसमाशिषः ॥ यथोक्तनियमैर्यु-
क्तामंत्रार्थेस्थिरबुद्धयः ॥ यत्कृपालोचनात्सर्वाऋद्धयोवृद्धिमाप्नुयुः ॥ ममयज्ञेजपेपूज्याः संतुमेनियमा-
न्विताः ॥ अक्रोधनाः शौचपराः सततंब्रह्मचारिणः ॥ देवध्यानरतानित्यंप्रसन्नमनसःसदा ॥ अदुष्टभाषिणः
संतुमासंतुपरनिंदकाः ॥ ममापिनियमाह्येतेभवंतुभवतामपि ॥ आस्तांप्रासंगिकं ॥ ॥ अथगर्भाधानं ॥
तत्राद्येरजोदर्शनेदुष्टवारर्क्षतिथ्यादौशांतिंमत्कृतशांतिरत्नोक्तविधिनाकृत्वा आद्यरात्रिचतुष्टयवर्जसमरात्रिषुम-
त्कृतनिर्णयसिंधावुक्तेकालेतत्कार्यं ॥ कर्तासभार्योदेशकालौस्मृत्वाऽस्यांममभार्यायांजनिष्यमाणसर्वगर्भा-
णांबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंगर्भाधानंकरिष्ये ॥ इत्युक्त्वातदंगतयागणेशपूजापुण्याह-
वाचनमातृकापूजानांदीश्राद्धानिप्राग्वत्कृत्वालंकृतोनववस्त्रंधृत्वाश्वगंधारसंदूर्वारसंभार्यादक्षिणनासाबिलेसेच -
येत्नीराजिता सूर्यंनमस्कुर्यात् ततोरात्रौशय्यायांविष्णवेनमः एवंत्वष्ट्रेन० प्रजापतयेन० धात्रेन० सिनीवा-
ल्यैन० सरस्वत्यैन० अश्विभ्यांन० पर्जन्यायनमः इतियोनिमभिमृश्यस्त्रियंगत्वाऋतौस्नायात् ॥ स्त्रियानस्नानं ॥

अनृतौमूत्रवच्छौचाचमने ॥ इतिगर्भाधानं ॥ अथपुंसवनं ॥ द्वितीयेतृतीयेचतुर्थेवामासेपुंनक्षत्रेभर्ताभ्यंगं
कृत्वा देशकालौस्मृत्वाऽस्यां मम भार्यायां जनिष्यमाणगर्भस्यपुंरूपताप्राप्त्यर्थंबीजगर्भसमुद्भवैनोनिबर्ह-
णार्थंचपरमेश्वरप्रीत्यर्थंपुंसवनंकरिष्ये इतिसंकल्प्य गणेशपूजापुण्याहवाचनमातृकापूजानांदीश्राद्धानिकृत्वा-
समानवर्णसवत्सगोर्दधिपत्न्यादक्षिणपाणौदत्वामध्येप्रागग्रंयवंद्वौमाषौपार्श्वयोर्दत्वाकिंपिबसीतित्रिः स्पृष्ट्वापुंस-
वनंत्रिरुक्त्वासाप्राश्नीयात् ॥ एवंत्रिः कुर्यात् ॥ इतिपुंसवनम् ॥ ॥ अथसीमंतः ॥ चतुर्थेषष्ठेऽष्टमेवामासिप्राग्वा-
प्रसवात्पुंनक्षत्रे भर्तादेशकालौसंकीर्त्य ममास्यांभार्यायांजनिष्यमाणसर्वगर्भाणांबीजगर्भसमुद्भवैनोनिरसनद्वा-
राप्रतिगर्भंसंस्कारातिशयद्वाराश्रीपरमेश्वरप्रीत्यर्थंसीमंतोन्नयनंकरिष्येइत्युक्त्वातदंगतयागणेशपूजापुण्याहवाच-
नमातृकापूजानांदीश्राद्धानिकृत्वालंकृतोनववस्त्रधरोदूर्वारसंभार्यादक्षिणनासायांअग्नयेनमः राज्ञेवरुणायनमइति
सिंचेत् ॥ ततः स्त्रीशुक्लांशलल्लींकुशत्रययुतामुदुंबरफलगुच्छयुतामादायपश्चात्स्थित्वा प्रजापतयेनमइतिभ्रूमध्या-
दारभ्यामूध्नोर्द्वेधाकेशान्कृत्वात्रिः सीमंतंकुर्यात् ॥ ततोनीराज्यतदुत्संगेफललड्डुकादिदत्वाविप्रेभ्योदशामान्ना-
निदक्षिणांचदद्यात् ॥ नारदः ॥ विप्रक्षत्रिययोः कुर्यात्दिवासीमंतकर्मतु ॥ वैश्यशूद्रकयोस्त्वेताद्दिवानिश्यपिके-



चन ॥ अत्रविशेषोगर्भिणीतत्पतिधर्माश्चमत्कृतेनिर्णयसिंधौज्ञेयः ॥ इतिसीमंतः ॥ ॥ अथजातकर्म ॥
पृथ्वीचंद्रोदयेकार्ष्णाजिनिः ॥ प्रादुर्भावेपुत्रपुत्र्योश्चंद्रसूर्यग्रहेतथा ॥ स्नात्वानंतरमात्मीयान्पितॄन्श्राद्धेनतर्पयेत् ॥
कुमारेजातेनाभिछेदात्प्राक्पितासचैलं स्नानं कृत्वादेशकालौसंकीर्त्यास्यकुमारस्यगर्भांबुपानजनितदोषपरिहार-
द्वाराबीजगर्भसमुद्भवैनोनिबर्हणद्वाराबलायुर्वर्चोभिवृद्ध्यर्थंश्रीपरमेश्वरप्रीत्यर्थंजातकर्मकरिष्य इतिसंकल्प्यगणे-
शपूजांपुण्याहवाचनंमातृकापूजांहेम्नानांदीश्राद्धं चकृत्वाज्यमधुनीहेम्नाघर्षयित्वाहेम्नाप्राशयित्वाकर्णयोर्निधाय-
देवायसवित्रेनमः सरस्वत्यैनमः अश्विभ्यांनमः इत्युक्त्वासावाभिमृश्येंद्रायनमः इत्युक्त्वाविप्रान्पूजयेत् ॥ इति
जातकर्म ॥ ॥ अथ षष्ठीपूजा ॥ ॥ मिताक्षरायांमार्कंडेयः रक्षणीयातथाषष्ठीनिशातत्रविशेषतः रात्रौजागरणं
कार्यंजन्मदानांतथाबलिः ॥ पुरुषाःशस्त्रहस्ताश्चनृत्यगीतैश्चयोषितः ॥ रात्रौजागरणंकुर्युर्दशम्यांचैवसूतके ॥
व्यासः ॥ सूतिकावासनिलयाजन्मदानामदेवताः ॥ तासांयागनिमित्तं तु शुद्धिर्जन्मनि कीर्तिता ॥ प्रथमेदिवसेषष्ठे
दशमेचैवसर्वदा ॥ त्रिष्वेतेषुनकुर्वीतसूतकंपुत्रजन्मानि ॥ अपरार्केब्राह्मे ॥ कन्याश्चतस्रोराकाद्यावातघ्नीचैवपंचमी ॥
क्रीडनार्थाचबालानांषष्ठीचशिशुरक्षिणी ॥ खड्गेगतुपूजनीयावैवैश्यत्रात्यैर्द्विजातिभिः ॥ राकानुमतिःसिनीवाली

कुहूरितिचतस्रः कन्याइत्यर्थः ॥ पितादेशकालौस्मृत्वा ॥ ममास्यशिशोः सर्वारिष्टशांत्यायुरारोग्यसिध्यर्थंगणेश
जन्मदाजीवंतिकाराकादीनां पूजनंकरिष्य इतिसंकल्प्य कलंशंसस्थाप्यतत्रपूर्णपात्रेवस्त्रोपरिगणेशंजन्मदांजी-
वंतिकांस्कंदंराकामनुमतिंसिनीवालींकुहूंवातभींच प्रतिमास्वावाह्यखड्गेशिशुरक्षिणीं कुड्येलिखितांषष्ठींचावाह्य
षौडशोपचारैः संपूज्यमाषभक्तादिबलिंदत्वाप्रार्थयेत् ॥ गौरीपुत्रोयथास्कंदः शिशुत्वेरक्षितः पुरा ॥ तथाममा
प्ययंबालः षष्ठिकेरक्ष्यतांनमइति इतिषष्ठीपूजा ॥ ॥ अथदत्तकपुत्रविधिः ॥ व्याहृत्यादिहोमस्यपुत्रप्रतिग्रहां-
गत्वात्तत्रचस्त्रीशूद्रयोरनधिकारात्तयोर्दत्तकः पुत्रोनभवत्येवेतिरुद्रधरादयः ॥ विप्रद्वाराहोमादिकारयेदितिवर्ध-
मानहरिनाथादयोगौडाः॥ संबंधतत्वेप्येवं ॥ प्रयोगपारिजातेशौनकः ॥ अपुत्रोमृतपुत्रोवापुत्रार्थंसमुपोष्यच ॥
वाससीकुंडलेदत्वाउष्णीषंचांगुलीयकं ॥ बंधून्नेनसंभोज्यब्राह्मणांश्चविशेषतः॥ अन्वाधानादियत्तंत्रंकृत्वाज्यो-
त्पवनांतकं ॥ दातुः समक्षंगत्वातुपुत्रंदेहीतियाचयेत् ॥ देवस्यत्वोतिमंत्रेणहस्ताभ्यांपरिगृह्यच ॥ अंगादंगे-
त्यृचंजप्त्वाआघ्रायशिशुमूर्धनि ॥ गृहमध्येतमाधायचरुंहुत्वाविधानतः ॥ यस्त्वाहृदेत्यृचाचैवतुभ्यमग्नेऋ-
चैकया ॥ सोमोददत्येताभिः प्रत्यृचंपंचभिस्तथा ॥ स्विष्टकृदादिहोमंचकृत्वाशेषंसमापयेत् ॥ मिताक्षरादौ



वसिष्ठेनतुव्याहृतिभिराज्येनहोमउक्तः ॥ सचविप्रद्वाराकारणीयः ॥ विशेषस्तुमत्कृतोनिर्णयासिंधौज्ञेयः ॥ सच
दत्तकः पंचवर्षमध्येग्राह्योनोर्ध्वं ॥ उर्ध्वंतुपंचमाद्वर्षान्नदत्ताद्याः सुतानृपेतिकालिकापुराणात् ॥ ऊर्ध्वंतुस्वदा-
नेच्छोरेवदानं ॥ विक्रयंचैवदानंचननेयाः स्युरनिच्छवः ॥ दाराः पुत्राश्चसर्वस्वमात्मनैवतुयोजयेदितिहेमाद्रौ
व्यासोक्तेः ॥ यत्तु याज्ञवल्क्यः ॥ स्वकुटुंबाविरोधेन देयं दारसुताद्दतेइति तत्स्वदानानिच्छुपुत्रपरमित्यन्यत्र
विस्तरः ॥ इतिदत्तकपुत्रविधिः ॥ ॥ अथसूतिकास्नानं ॥ ज्योतिःशास्त्रे ॥ करेंद्रभाग्यानिलवासवांत्यमैत्रैंदवा-
श्विध्रुवभेन्हिपुंसां ॥ तिथावरिक्तेशुभमाममनंतिप्रसूतिकास्नानविधिंमुनींद्राः ॥ अथनामकर्म ॥ मदनरत्नेबृहस्प-
तिः ॥ द्वादशेदशमेवापिजन्मतोपित्रयोदशे ॥ षोडशेविंशतौचैवद्वात्रिंशेवर्णतः क्रमात् ॥ नारदीये ॥ सूतकां-
तेनामकर्मविधेयंस्वकुलोचितं ॥ नामपूर्वंतुबालस्यमंगलंसुसमाक्षरैः ॥ तत्रैवगार्ग्यः ॥ मासनामगुरोर्नामदद्या-
द्बालस्यवैपिता ॥ कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः ॥ उपेंद्रोयज्ञपुरुषोवासुदेवस्तथाहरिः ॥ योगीशः
पुंडरीकाक्षोमासनामान्यनुक्रमात् ॥ अत्रमार्गशीर्षादिश्चैत्रादिर्वाक्रमइतिमदनरत्ने ॥ नाक्षत्रमपिनामकार्यं ॥
कुलदेवतानक्षत्रसंबद्धंपितानामकुर्यादितितत्रैवशंखोक्तेः ॥ परिशिष्टेपि ॥ तदक्षरादिकंनामयस्मिन्धिष्ण्येयद-

क्षरं ॥ मनुः ॥ शूद्रस्यप्रेष्यसंयुतं ॥ तत्रस्वाशौचांतेद्वात्रिंशेवाह्निपितादेशकालौस्मृत्वास्यकुमारस्यबीजगर्भस-
मुद्भवैनोनिबर्हणद्वारा नामव्यवहारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थंनामकरणंकरिष्ये इतिसंकल्प्यगणेशपूजा-
पुण्याहवाचनमातृकापूजानांदीश्राद्धानिकृत्वाकांस्यादिपात्रेतंडुलपूर्णेहेम्नागणेशनामततः कुलदेवतानामततो
मासनामततोनाक्षत्रंततोव्यावहारिकंशिवदासइत्यादिलिखित्वानामदेवताः संपूज्यशिशोर्दक्षिणकर्णेऽमुकभक्तो-
सि अमुकोसीत्यादिनामानिउक्त्वोर्ध्वंकृतांजलिः कुलदेवतानाम्नामुकदासोभवतः सर्वान्ब्राह्मणानभिवादयते ॥
आयुष्मान्भवत्वममुकदास इतिविप्राः ॥ एवंमासनाम्नानाक्षत्रेणनाम्नाव्यावहारिकेणनाम्नेत्यादिवाच्यं ततः
शतंदशवामान्नानिदत्वाविप्रेभ्यआशिषोगृण्हीयात् ॥ ॥ इतिनामकर्म ॥ ॥ अथदोलारोहः ॥ पारिजाते
बृहस्पतिः ॥ खट्वारोहस्तुकर्तव्योदशमेद्वादशेपिवा ॥ ज्योतिर्निबंधे ॥ आंदोलाशयनेपुंसोद्वादशोदिवसः शु-
भः ॥ त्रयोदशस्तुकन्यायाननक्षत्रविचारणा ॥ करत्रयेवैष्णवरेवतीषुदितिद्वयेचाश्विनकद्वयेषु ॥ कुर्याच्छिशूनां
नृपतेश्चतद्वदांदोलनंवैसुखिनोभवंति ॥ ॥ अथकर्णवेधः ॥ ज्योतिर्निबंधेगर्गः ॥ मासेषष्ठेसप्तमेवाप्यष्टमेमा-
सिवत्सरे ॥ कर्णवेधंप्रशंसंतिपुण्यायुःश्रीविवृद्धये ॥ मदनरत्नेवसिष्ठः ॥ मासेषष्ठेसप्तमेवाष्टमेवावेध्यौकर्णौद्वाद-



शेषोडशेन्हि ॥ हेमाद्रौव्यासः ॥ कार्तिकेपौषमासेवाचैत्रेवाफाल्गुनेपिवा ॥ कर्णवेधंप्रशंसंतिशुक्लपक्षेशुभेदिने ॥
सचमृगार्द्राहस्ताचित्रापुनर्वसुपुष्यश्रवणधनिष्ठारेवतीषुरिक्तापर्ववर्जतिथौकार्यः ॥ मदनरत्ने ॥ सौवर्णीराजपु-
त्रस्यराजतीविप्रवैश्ययोः ॥ शूद्रस्यचायसीसूचीमध्यमाष्टांगुलात्मिका ॥ चंडेश्वरः ॥ सार्द्धमासद्वयेदद्यात्तांबू-
लंप्रथमंशिशोः ॥ अथनिष्क्रमणं ॥ ज्योतिर्निबंधे यमः ॥ तृतीयेवाचतुर्थेवामासिनिष्क्रमणंभवेत् ॥ मनुः ॥
मासेचतुर्थेकर्तव्यंशिशोर्निष्क्रमणंगृहात् ॥ षष्ठेन्नप्राशनंमासियच्चेष्टंमंगलंकुले ॥ अत्राशिशूक्तिर्नतुद्विजोक्तिः ॥
तेनशूद्रस्यापीतिमेधातिथिः ॥ मदनरत्नेबृहस्पतिः ॥ अन्नप्राशनकालेवाकुर्यान्निष्क्रमणक्रियाम् ॥ विष्णुधर्मो-
त्तरे ॥ दिगीशानांदिनेतत्रतथाचंद्रार्कयोर्द्विज ॥ पूजनंवासुदेवस्यगगनस्यचकारयेत् ॥ बहिर्निष्कासयेद्गेहा-
च्छंखपुण्याहनिःस्वनैः ॥ पितादेशकालौस्मृत्वाऽस्यशिशोर्बीजगर्भसमुद्भवैनोनिबर्हणद्वाराबलायुर्वर्चोभिवृध्यर्थं
निष्क्रमणंकरिष्ये ॥ इतिसंकल्प्यगणेशपूजापुण्याहवाचनमातृकापूजानांदीश्राद्धानिकृत्वाप्रतिमास्वक्षतपुंजेषु
वेंद्रादिदशदिक्पालचंद्रसूर्यवासुदेवगगनानांनामभिरावाहनादिपूजांकृत्वाशंखतूर्यमंगलस्वनैः सूर्यचंद्रधेनूनांद-
र्शनंकारयित्वापठेत् ॥ चंद्रार्कयोर्दिगीशानांदिशांचगगनस्यच ॥ निक्षेपार्थमिमंदद्मितेत्वांरक्षंतुसर्वदा ॥ अप्रम-

त्तंप्रमत्तंवादिवारात्रमथापिवा ॥ रक्षंतुसततंसर्वेदेवाः शक्रपुरोगमाः ॥ ततोविप्राः करोतुस्वस्तितेब्रह्मेत्याद्या-
शिषंदद्युः ॥ अथोपवेशनं ॥ प्रयोगपारिजातेपाद्मे ॥ पंचमेचतथामासिभूमौतमुपवेशयेत् ॥ तत्रसर्वेग्रहाः श-
स्ताभौमोप्यत्रविशेषतः॥ विष्णुधर्मोत्तरे ॥ वाराहंनूजयेद्देवंपृथ्वींचैवतथाद्विजं ॥ पितादेशकालौस्मृत्वास्यकुमार-
स्यसर्वारिष्टशांत्यायुरारोग्यक्षेमार्थमुपवेशनंकरिष्येइतिसंकल्प्यगणेशपूजांपुण्याहवाचनंच कृत्वा पीठेप्रतिमायां
वाराहंपृथ्वींचनाम्नाषोडशोपचारैः संपूज्य तदग्रेपंचसप्तवाधान्यपुंजान्कृत्वातन्मध्येभूमौवस्त्रेकरोतुस्वस्तितेब्र-
ह्मेत्याद्यैर्वाद्यघोषेणशिशुमुपवेश्यमृत्युंजयंस्मृत्वाभस्मनारक्षांकृत्वापठेत् ॥ रक्षैनंवसुधेदेविसदासर्वगतंशुभे ॥ आ-
युष्प्रमाणंसकलं निक्षिपस्व हरिप्रिये ॥ अचिरादायुषस्त्वस्ययेकेचित्परिपंथिनः ॥ जीवितारोग्यवित्तेषुनिर्दह-
स्वाचिरेणतान् ॥ धारिण्यशेषभूतानांमातात्वमसिकामधुक् ॥ अजराचाप्रमेयाचसर्वभूतनमस्कृता ॥ चराचराणां
भूतानांप्रतिष्ठाचाव्ययाह्यसि ॥ कुमारंपाहिमातस्त्वंब्रह्मातदनुमन्यतामिति अत्रैवकटिसूत्रबंधनं शिष्टास्त्वन्नप्रा-
शनदिनेएवनिष्क्रमणमुपवेशनंचकुर्वंति ॥ अथान्नप्राशनंमदनरत्नेनारदः ॥ षष्ठेवाप्यष्टमेमासिपुंसांस्त्रीणांतुपंचमे॥
सप्तमेमासिवाकार्यंनवान्नप्राशनंशुभम् ॥ लौगाक्षिः ॥ षष्ठेन्नप्राशनंजातेषुदंतेषुवा ॥ विष्णुधर्मोत्तरे ॥ ब्रह्माणंशंकरं



विष्णुंचंद्रार्कौचदिगीश्वरान् ॥ भुवंदिशश्चसंपूज्यहुत्वावन्हौतथाचरुं ॥ देवतापुरतस्तस्यधान्युत्संगगतस्यच ॥ अलं-
कृतस्यदातव्यमन्नपात्रंसकांचनं ॥ मध्वाज्यदधिसंयुक्तंप्राशयत्पायसंतुवा ॥ सर्वत्रमूलंविशेषश्चमत्कृतेनिर्णयासिं-
धौज्ञेयः ॥ पितादेशकालौस्मृत्वाऽस्यशिशोर्बीजगर्भसमुद्भवैनोविनाशद्वाराबलायुर्वर्चोभिवृद्ध्यर्थमन्नप्राशनंकरिष्ये
इति संकल्प्येगणशपूजापुण्याहवाचनमातृकापूजानांदीश्राद्धानिकृत्वाब्रह्मादीन्प्रतिमासुतंडुलपुंजेषुवासंपूज्यत-
न्नामाभिर्वन्हौचरुंहुत्वाज्यदधिमधुयुतमन्नंपायसंवाप्राशयित्वातांबूलंचदत्वारत्नहेममणिभाजनाद्यग्रेनिधाययद्बालः
स्पृशेत्सास्यजीविकेतिपरीक्षयेत् ॥ इत्यन्नप्राशनं ॥ ॥ अथाब्दपूर्तिः ॥ गौडव्यवहारनिर्णये ॥ नवांबरधरोभू-
त्वापूजयेच्चचिरायुषं ॥ मार्कंडेयंनरोभक्त्यापूजयेत्प्रयतस्तथा ॥ ततोदीर्घायुषंन्यासंरामंद्रौणिंकृपंबलिं ॥ प्रल्हादंच
हनूमंतंबिभीषणमथार्चयेत् ॥ स्वनक्षत्रंजन्मतिथिंप्राप्यसंपूजयेन्नरः ॥ षष्ठींचदधिभक्तेनवर्षेवर्षेपुनः पुनः ॥
तिथितत्वेतन्नाम्नातिलहोमोप्युक्तः ॥ आदित्यपुराणे ॥ सर्वैश्चजन्मादिवसेस्नातैर्मंगलवारिभिः ॥ गुरुदेवाग्नि-
विप्राश्चपूजनीयाः प्रयत्नतः ॥ स्वनक्षत्रंचपितरस्तथादेवः प्रजापतिः ॥ प्रतिसंवत्सरंयत्नात्कर्तव्यश्चमहोत्सवः ॥
कृत्यचिंतामणौ ॥ गुडदुग्धतिलान्दद्याद्धस्तेग्रंथौचबंधयेत् ॥ गुग्गुलंनिंबसिद्धार्थदूर्वागोरोचनादिकं ॥ संपूज्य

भानुर्विघ्नेशौमहार्षिंप्रार्थयेदिदं ॥ जन्मतिथिश्चौदयिकीग्राह्या ॥ तदुक्तंकृत्यतत्त्वार्णवेस्कांदे ॥ युगाद्यावर्षवृद्धिश्च
सप्तमीपार्वतिप्रिया ॥ रवेरुदयमीक्षतेनतत्रातिथियुग्मतेति ॥ पितासबालोभ्यंगंकृत्वानववस्त्रधरोदेशकालौस्मृ-
त्वास्यशिशोदीर्घायुरारोग्यार्थवर्षदिनकृत्यंकरिष्यइत्युक्त्वाप्रतिमास्वक्षतपुंजेषुवागणेशं सूर्यं मार्कंडेयंव्यासंपर-
शुराममश्वत्थामानंकृपंबलिंप्रल्हादंहनूमंतबिभीषणंषष्ठींस्वनक्षत्रंपितरौप्रजापतिंगुरुमग्निं चसंपूज्यपक्षेतन्नाम्ना
तिलहोमंचकृत्वागुग्गुलनिंबसर्षपदूर्वारोचनागुडानांपोटलिंहस्तेबध्वामार्कंडेयंप्रार्थयेत् ॥ चिरंजीवीयथात्वंभो
भविष्यामितथामुने ॥ रूपवान्वित्तवांश्चैवश्रियायुक्तश्चसर्वदा ॥ मार्कंडेयनमस्तेस्तुसप्तकल्पांतजीवन ॥ आयु-
रारोग्यसिद्ध्यर्थंप्रसीदभगवन्मुने ॥ चिरजीवीयथात्वंतुमुनीनांप्रवराद्विज ॥ कुरुष्वमुनिशार्दूलतथामांचिरजीवि-
नं ॥ मार्कंडेयमहाभागसप्तकल्पांतजीवन ॥ आयुरारोग्यसिध्यर्थमस्माकंवरदोभव ॥ पितात्वेनामितिवदेत् ॥
ततोगुडतिलयुतंदुग्धमादाय ॥ सतिलंगुडसंमिश्रमंजल्यर्धमितंपयः ॥ मार्कंडेयाद्वरंलब्ध्वापिबाम्यायुर्विवृद्धये ॥
इतिपीत्वागुरुदेवविप्राः पूज्याः ॥ गौडातिथितत्त्वेस्कांदे ॥ खंडनंनखकेशानांमैथुनाध्वगमौतथा ॥ आमिषं
कलहंहिंसांवर्षवृद्धौविवर्जयेत् ॥ तत्रैव ॥ कृतांतकुजयोर्वारेयस्यजन्मतिथिर्भवेत् ॥ आनृक्षयोगसंप्राप्तौविघ्न-

स्तस्यपदेपदे ॥ कृतांतः शनिः ॥ जन्मनक्षत्रयोगेनदोषः ॥ तस्यसर्वौषधिस्नानंगुरुदेवाग्निपूजनं ॥ विशेषोनिर्ण-
यसिंधौज्ञेयः ॥ अथहेमाद्रौवर्धापनेविशेषः ॥ भविष्ये ॥ युधिष्ठिरउवाच ॥ देवदेवमहाभागबालानांहितका-
म्यया ॥ वर्द्धापनविधिंब्रूहिराज्ञामपिविशेषतः ॥ कृष्णउवाच ॥ प्रयागेव्यासेनपृष्टः सनत्कुमारः प्राह ॥ मासिप्र-
विष्टेप्रथमेबालवर्द्धापनंबुधैः ॥ राज्ञांवातन्मुनिश्रेष्ठसमांतेचविधीयन्ते ॥ कुमुदामाधवीगौरीरुद्राणीपार्वतीउमा ॥
कालीसरस्वतीचैवसावित्रीब्रह्मणःप्रिया ॥ सतीसंज्ञातथामेधापुष्टिस्तुष्टिसमन्विता ॥ नृपडिंभपरित्राणाजीवंतीना-
मषोडशी ॥ पूजनीयाःप्रयत्नेनसूर्यमध्येविलिख्यतु ॥ रजनीपिष्टतोवापिलिखेद्वाकुंकुमेनतु ॥ गंधपुष्पैः सुगंधैश्चदी-
पवस्त्रनिवेदनैः ॥ पूजनीयास्तुसंस्थाप्यकुमुदाद्याः पृथक्पृथक् ॥ नामभिः पूजनीयास्ताः पूजयित्वातुबालकं ॥
भूपतिंतुमुनेवाथसर्वालंकारभूषितं ॥ पूजयेन्मातृपितरौबालवर्धापनेसति ॥ पुरोधाः पूजयेद्ब्रह्मन्राजवर्धापना-
विधौ ॥ कुमुदाद्याः समुद्दिश्यवंशपात्राणिकल्पयेत् ॥ एकैकस्याधनाढ्यस्तुदद्यात्षोडशषोडश ॥ तदर्धानित-
दर्धानिद्वेचैकैकमथापिवा ॥ बहुपक्वान्नयुक्तानिबहुपुष्पफलानितु ॥ सुवासिनीभ्योविप्राणांदद्याद्भक्तिपुरःसरं ॥
प्रीयंतांकुमुदाद्यामेबालकायुर्विवर्द्धनाः ॥ बलेनयशसातुष्ट्याबालंमेवर्द्धयंतुवै ॥ प्रयच्छंतुसदारोग्यंसौख्यंसौभा-

ग्यमेवच ॥ श्रीश्वतेतिचमंत्रेणह्यर्घ्यंताभ्यःप्रदापयेत् ॥ वस्त्रतांबूलपुष्पादिदिनेतस्मिन्प्रकल्पयेत् ॥ सुवासिनी-
भ्योदेयं तु कुमुदाप्रीयतामिति ॥ तत्रैवस्कांदे ॥ एवंवर्द्धापनंवत्सरांतेवैजन्मवासरे ॥ व्यतीतेषुचमासेषुबाला-
नांबलवृद्धये ॥ नबालरोगाः प्रभवंतितस्यनस्कंदरोगानतुशाकिनीभ्यः ॥ भयंभवेन्नैवजलाग्निदिग्भ्योबालस्य
भूतादिविशेषतश्च ॥ संप्राप्यराज्यंनृपतिः समांतेकुर्यादिमंशांतिमहोत्सवंच ॥ ग्रहांस्तथापूज्यविनायकंचदुर्गांच
भक्त्याकुमुदादिदेवीः ॥ यः पूजयेद्भक्तिपुरःसरांहिसहेमपूर्णोबलवृद्धियुक्तः ॥ गोपथब्राह्मणेतुराजानमभिवर्द्धयि-
ष्यन्नायुषावर्चसातेजसायशसाविजयेनकीर्त्यापवित्रैर्मंगलैरभ्युक्ष्यउदकैरुक्मै रर्चयित्वामाहेंद्रंहविर्निरूप्यलोक-
पालेभ्यश्चश्रपर्यन्महांइंद्रायओजसेतिलोकपालांश्चेष्ट्वाराजानमन्वारभ्यजुहुयादर्वांचमिंद्रंत्रातारमिंद्रंवर्धयइतित्रि
भिः रक्षांकृत्वासुगुरुणासआसतेइतिरोचनेनालंकुर्यात्प्रजायैतंतुमितिसूक्तंसंपातवंतंकृत्वाधातातेयमित्युक्तम-
भिवर्द्धस्वेति ॥ इतिकमलाकरभटकृतौशूद्रधर्मेऽब्दपूर्तिः ॥ अथचौलं ॥ बृहस्पतिः ॥ पापग्रहाणांवारादौविप्रा-
णांशुभदंभवेत् ॥ क्षत्रियाणांक्षमासूनौविट्शूद्राणांशनौशुभं॥अथकालनिर्णयः॥सर्वोमातुर्गर्भेरजोदर्शनेचनकार्य
मित्यादिरन्यश्चविशेषोद्विजतुल्योमत्कृतेनिर्णयसिंधौज्ञेयः॥शूद्रस्यविशेषमात्रंतूच्यते॥प्रथमेद्वितीयेतृतीयेपंचमेवा-



ऽब्देयथाकुलधर्मंचोक्तकालेपितादेशकालौस्मृत्वास्यशिशोर्बीजगर्भसमुद्भवदोषनाशद्वारा बलायुर्वर्चोभिवृद्ध्यर्थं
चौलकर्मकरिष्यइतिसंकल्प्यगणेशपुजापूण्याहवाचनमातृकापूजावसोर्धारानांदीश्राद्धानिकृत्वाभद्रासनेशिशुमु
पवेश्यैकांशिखांकेशपंक्तिंवासंरक्ष्यसर्वंवावपनंयथाचारंकार्यं ॥ ततोनीराजनादिकार्यं ॥ ॥ इतिचौलं ॥ अथ
विद्यारंभः ॥ मदनरत्नेनृसिंहः ॥ अक्षरस्वीकृतिंकुर्यात्प्राप्तेपंचमहायने ॥ उत्तरायणगेसूर्येकुंभमासंविवर्जयेत्॥
अथधनुर्विद्यादीपिकायां ॥ अदितिगुरुयमार्कस्वातिचित्राग्निपित्र्यध्रुवहरिवसुमूलेष्विंदुभागांत्यभेषु ॥ श-
निशशिबुधवारेविष्णुबोधेपिपौषेसुसमयतिथियोगेचापविद्याप्रदानं ॥ तच्चहरिंलक्ष्मींसरस्वतींचपूजयित्वाकार्यं ॥
सर्वायुधमहामात्रसर्वदेवारिसूदन ॥ चापमांसमरेरक्षसाकंशरवरैरिह ॥ धृतंकृष्णेनरक्षार्थंसंहारायहरेणच ॥ त्रयी-
मूर्तिगतंदेवंधनुरस्त्रंनमाम्यहमितिमंत्रेणसंपूज्यनत्वाबाणंप्राच्यांमुक्त्वाविप्रान्पूजयेत् ॥अथच्छुरिकाबंधनं ॥ ज्यो-
तिर्निबंधेनारदः ॥ छुरिकाबंधनंवक्ष्येनृपाणांप्राक्करग्रहात् ॥ विवाहोक्तेषुमासेषुशुक्लपक्षेप्यनस्तगे ॥ जीवेशुक्रेचभू-
पुत्रेचंद्रताराबलान्विते ॥ मौंजीबंधर्क्षतिथिषुकुजवर्जितवासरे ॥संग्रहे ॥ शूद्राणांराजपुत्राणांमौंज्यभावेऽस्त्रबंधनं॥
मौंजीबंधोक्ततिथ्यादौकार्यंभौमदिनंविना ॥ विष्णुधर्मे ॥ पूजयित्वाहरिंलक्ष्मींतथादेवींसरस्वतीं ॥ स्वविद्या-

सूत्रकारांश्चस्वांचविद्यांविशेषतः ॥ एतेषामेवदेवानांनाम्नातुजह्रुयाद्घृतं ॥ दक्षिणाभिर्द्विजेंद्राणांकर्तव्यंचात्रपूजनं ॥ मंत्रस्तु ॥ सर्वायुधानांप्रथमंनिर्मितासिपिनाकिना ॥ शूलायुधाद्विनिष्कृष्यकृत्वामुष्टिग्रहंशुभम् ॥ चंडिकायाः प्रदत्तासिसर्वदुष्टनिबर्हिणी ॥ तयाविस्तारिताचासिदेवानांप्रतिपादिता ॥ सर्वसत्वांगभूतासिसर्वाशुभनिबर्हिणी ॥ छुरिकेरक्षमांनित्यंशांतिंयच्छनमोस्तुते ॥ इतिसंपूज्यनत्वादक्षिणेकटिभागेबध्नीयात् ॥ अपरार्केवृद्धशातातपः ॥ शिशोरभ्युक्षणंप्रोक्तंबालस्याचमनंस्मृतम् ॥ जलस्थलादिसंस्पर्शेस्नानमेवकुमारके ॥ प्राक्चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः ॥ कुमारः सतुविज्ञेयोयावन्मौंजीनिबध्यते ॥ बालस्यंपंचमाद्दर्षाद्दिक्षार्थंशौचमादिशेदित्यादिमत्कृतेनिर्णयसिंधौज्ञेयं ॥ ॥ अथविवाहः ॥ तत्रसापिंड्यंशूद्राणांद्विजवदेव सर्वत्रावयवानुवृत्तेः सद्भावादितिविज्ञानेश्वरः ॥ तच्चमयानिर्णयसिंधावुक्तमितिनात्रोच्यते ॥ तत्रब्राह्मार्षदैवप्राजापत्यगांधर्वासुरराक्षसपैशाचाअष्टौविवाहाः ॥ तानाहयाज्ञवल्क्यः ॥ ब्राह्मोविवाहआहूयदीयतेशक्त्यलंकृता ॥ यज्ञस्यऋत्विजेदैवआदायार्षस्तुगोद्वयं ॥ इत्युक्त्वाचरतांधर्मंसहयादीयतेर्थिने ॥ सकायः पावयेत्तज्जः षड्षड्वंश्यान्सहात्मना ॥ आसुरोद्रविणादानाद्गांधर्वः समयान्मिथः ॥ राक्षसोयुद्धहरणात्पैशाचः कन्यका



छलादितिएषुशूद्रस्यप्राजापत्योमुख्यः ॥ आसुरगांधर्वौमध्यमौ ॥ राक्षसपैशाचौकनिष्ठौ ॥ तदाहमनुः ॥ आसुरंवैश्यशूद्रयोः ॥ षडानुपूर्व्याविप्रस्यक्षत्रस्यचतुरोवरान् ॥ विट्शूद्रयोस्तुतानेवविद्याद्धर्म्यानराक्षसान् ॥ चतुर आसुरगांधर्वराक्षसपैशाचान् ॥ तांश्चतुरोराक्षसवर्जान् ॥ कल्पतरौब्राह्मविवाहमुक्त्वाब्राह्मणानांसतामेषधर्मइत्युक्तेर्ब्राह्मदैवौविप्रस्यैव ॥ अन्येत्रयाणांतुल्याः ॥ हेमाद्रौपैठीनसिः ॥ पैशाचः प्रतिलोमानां ॥ काश्यपः ॥ शुल्केनयेप्रयच्छंतिस्वसुतांलोभमोहिताः॥ आत्मविक्रयिणः पापा महाकिल्बिषकारिणः ॥ पतंति नरकेघोरेघ्नंतिचासप्तमंकुलम् ॥ शूद्रेणासुरत्वासिद्ध्यैप्रीत्यादेयंनतुमूल्यं तेननदोषः अतएवगांधर्वासुरयोः फलमादित्यपुराणे ॥ गांधर्वेणविवाहेनयस्तुकन्यांप्रयच्छति ॥ गंधर्वलोकंव्रजतिगंधर्वैः पूज्यतेचसः ॥ शुल्केनदद्याद्यः कन्यांवरायसदृशायच ॥ किन्नरैरुपगीयेतगांधर्वलोकमेतिच ॥ हारीतः ॥ एषामन्यतमेनोढांधर्मपत्नींपरे प्राहुः ॥ विशेषोमेधातिथौकल्पतरौचज्ञेयः ॥ तत्रगांधर्वराक्षसपैशाचान्विनासर्वत्रोदकपूर्वंदानंनियतम् ॥ वसिष्ठः ॥ नोदकेननवाचाचकन्यायाः पतिरुच्यते ॥ पाणिग्रहणसंस्कारात्पतित्वंसप्तमेपदे ॥ गांधर्वादिष्वपि होमादिकार्यमेव ॥ गांधर्वासुरपैशाचाविवाहाराक्षसश्चयः ॥ पूर्वंपरिग्रहस्तेषुपश्चाद्धोमोविधीयते ॥ इत्यपरार्केव-

सिष्ठोक्तेः ॥ अतएवहोमाद्यभावेऽन्यस्मैदानमाहतुस्तत्रैववसिष्ठबौधायनौ ॥ बलादपहृताकन्यामंत्रैर्यदिनसंस्कृ-
ता ॥ अन्यस्मैविधिवद्देयायथाकन्यातथैवसा ॥ इदंराक्षसपैशाचपरं ॥ तयोरेवबलादपहारात् ॥ शूद्रस्यनमोमंत्रएव
॥ मनुरपि ॥ पाणिग्रहणिकामंत्रानियतंदारलक्षणं ॥ तेषांनिष्ठातुविज्ञेयाविद्वद्भिः सप्तमेपदे ॥ तत्रपाणिग्रहणं
सर्ववर्णसमानं ॥ पाणिर्ग्राह्यः सवर्णायास्त्वित्यविशेषेणयाज्ञवल्क्योक्तेः॥ उदकपूर्वकन्यादानस्यशूद्रेविकल्पः ॥
तदुक्तंस्मृतिकौमुद्यांब्राह्मे॥ युक्तंतुपाणिग्रहणंसर्ववर्णेषुसर्वशः॥जलपूर्वंतुविप्राणामन्येषामपिकाम्ययेतिअन्येत्वने-
न ब्राह्मोपिभवातिअलंकृत्यकन्यामुदकपूर्वंदद्यादेषब्राह्मोविवाहइत्याश्वलायनेनब्राह्मएवजलपूर्वतोक्तेः ॥ अन्ये
विशेषानिर्णयसिंधौज्ञेयाः ॥ स्मृतिकौमुद्यांब्राह्मे ॥ इष्टिंवैनायकींकृत्वाशचीयागंचशोभनम् ॥ नांदीमुखे-
भ्यः श्राद्धंचपितृभ्यः कार्यसिद्धये ॥ वाराहसंहितायां ॥ गृहेस्थितांवैपुरुहूतपत्नींप्राङ्मध्यसंध्यास्तमयेषुकन्या ॥
स्रग्गंधधूपैः प्रतिपूजयेत्तुपाणिग्रहेयासमुपागतेति ॥ अथप्रयोगः ॥ शूद्रस्यशूद्रापरिणयनेमंत्ररहितंक्रिया-
मात्रंकार्यमितिहरिहरभाष्येउक्तं ॥ तेनकातीयंकर्मोच्यते ॥ तत्रविवाहोक्तेमुहूर्तेकन्यायाः पिताभ्रातान्योवाबं-
धुर्वरगृहंगत्वाचम्यदेशकालौसंकीर्त्यकरिष्यमाणविवाहांगत्वेनवाग्दानंकरिष्यइतिसंकल्प्यगणेशंवरुणं चसंपू-



ज्यवरस्यपादप्रक्षालनंगंधवस्त्राद्यैः पूजांकृत्वापूगीफलनारिकेरकुंकुमादिरंजितवस्त्रंचादायामुकप्रपौत्रायामुक-
पौत्रायामुकपुत्रायामुकदासायवरायामुकप्रपौत्रीं अमुकपौत्रीं अमुकपुत्रीं अमुकनाम्नींकन्यांतुभ्यंज्योतिर्विदुक्ते
मुहूर्तेदास्येइत्युक्त्वा ॥ अव्यंगेपतितेक्लीबेदशदोषविवर्जिते ॥ तत्कालोपस्थितेकन्यांपितातुभ्यंप्रदास्यतीति ॥
पितातुअहंदास्याम्यसंशयमितिवदेत् ॥ स्नातेस्नातामरोगिणींवापाठः ॥ केचित्तुकन्यागृहंगत्वातांसंपूज्य
अव्यंगेपतितेक्लीबेदशदोषविवर्जिते ॥ इमां कन्यां प्रदास्यामि देवाग्निद्विजसन्निधावितिकन्यापितावरबंधुहस्ते
दत्वा वाचादत्तामयाकन्यावरार्थेस्वीकृतात्वया ॥ कन्यावलोकनविधौनिश्चितस्त्वंसुखीभवेतिकन्यापिता
वाचादत्तात्वयाकन्यावरार्थंस्वीकृतामया ॥ वरावलोकनविधौइत्यूहेनवरपितावदेदित्याहुः ॥ ततः परस्परम-
र्चनविप्रपूजादिकार्यं ॥ आचाराद्धरिद्राचंदनादिविवाहोक्तेमुहूर्तेकार्यं ॥ इतिवाग्दानं ॥ ततः पूर्वदिनेविवा-
हदिनेवाप्रातः कन्यावरयोः पिताभ्यंगंकृत्वाग्रहविनायकशांत्यादिकृत्वादेशकालौसंकीर्त्यअमुकस्यविवाहांग-
तयागणेशपूजापुण्याहवाचनमातृकापूजावसोर्धाराशचीपूजानांदीमुखश्राद्धानि करिष्य इत्युक्त्वातानिपूर्ववत्कृ-
त्वातंडुलपूर्णकुंभद्वयेऽविघ्नार्थंवंशपात्रेशाखासु नंदिनीनलीनिमैत्रीह्युमाचपशुवर्धिनी शस्त्रेभगवतींचमातृ-

सन्निधौसंस्थाप्यचतुर्थदिनेमंडपदेवताः पूजयेत् ॥ पीतसूत्रेणकंकणंबध्वाकन्यायाः सप्तभिः पंचभिर्वाकरैर्मि-
तांपंचसप्तसोपानांवेदींकुर्यात् ॥ चतुर्हस्तावेदीतिहरिहरः ॥ वरस्यसीमांतपूजांकृत्वागृहागतंवरंसंमानेनोपवे-
शयेत् ॥ ततआचार्योवेद्यांहस्तमात्रंस्थंडिलंदर्भैः परिसमूह्यगोमयेनोपलिप्ययाज्ञियकाष्ठेनप्रागग्रास्तिस्रोलेखाः
कृत्वात्रिर्मृदमुद्धृत्याभ्युक्ष्याग्निंप्रतिष्ठाप्यवरस्यप्राङ्मुखस्यमधुपर्कपूजांकुर्यात् ॥ यथा कन्यापितासनंदत्वातस्य
पश्चात्तिष्ठंतंवरमाहसाधुभवानास्तामर्चयिष्यामोभवंतामिति ॥ अर्चयेतिवरः ॥ ततोविष्टरइत्यन्येनत्रिरुक्तेदा-
ताप्रत्यङ्मुखस्तिष्ठन्प्रतिगृह्यतामितिकूर्चंपंचविंशतिकुशमयंचदद्यात् ॥ तंवरआसनस्यपश्चात्तिष्ठन्गृहीत्वावि-
ष्टरायनमइत्यासनेदत्वोपविशेत् ॥ ततोन्येनत्रिः पाद्यमित्युक्तेगंधदूर्वाक्षतायुतंपाद्यंदाताप्रतिगृह्यतामितिद-
द्यात् ॥ तेनवरः आदौसव्यंततोदक्षिणमितिपादौप्रक्षालयेत् ॥ ततोदातान्यंविष्टरमन्येनत्रिर्निवेदितमादायवर-
पादाधोदद्यात् ॥ ततोगंधपुष्पाक्षतकुशातिलसर्षपदधिदूर्वायुतमर्घ्यमादायान्येनार्घ्यइति त्रिरुक्तेदाताप्रतिगृ-
ह्यतामितिदद्यात् ॥ वरस्तमद्भ्योनमइत्यंजलिनादायशिरसाभिवाद्यभूमौक्षिपेत् ॥ ततोन्येनाचमनीयमिति
त्रिरुक्त्वादत्तंप्रतिगृह्यसकृत्प्राश्याचामेत् ॥ ततोन्येनमधुपर्कइत्युक्तेदातादत्तंकांस्यस्थं तेनैवपिहितंदधिम-



धुघृतंवावरोदातृहस्तस्थमुद्घाट्यसवित्रेनमइत्यवेक्ष्यसवित्रेनम इतिप्रतिगृह्यवामेनिधायमधुपर्कायनमइत्यना-
मिकयालोड्यानामिकांगुष्ठाभ्यांबहिःक्षिप्त्वापुनरेवंद्विः कृत्वाताभ्यामेवत्रिःप्राश्नीयात् ॥ मधुपर्कायनमइ-
तिवाअंगुष्ठानामिकाभ्यांद्वितीयमंगुष्ठमध्यमाभ्यांतृतीयमितिस्मृतिकौमुदी ॥ तच्चिंत्यं ॥ ततः शेषमसं-
चरेनिनीयद्विराचम्यवाचेनमःमुखे ॥ प्राणायनमः ॥ नसोः ॥ चक्षुर्भ्यांनमः चक्षुषोः॥ श्रोत्राभ्यांनमः कर्णयोः॥
बलायनमः बाह्वोः ॥ ओजसइत्यूर्वोः ॥ अंगेभ्यः इत्यंगेषु ॥ ततोन्येनात्रिर्गौरित्युक्तेप्रतिगृह्यरुद्राणांमात्रेवसूनांदु-
हित्रेआदित्यस्वस्रेगवेनमः ममार्चकस्यचपाप्माहतइत्युपांशुउत्सृजेत् तृणान्यत्तुइत्युच्चैर्विसृजेत् ॥ ततोदाताव-
स्त्रालंकारगंधस्रगाद्यैर्वरंपूजयेत् ततः सुलग्नेंतःपटंधृत्वामुखंनिरीक्षेत ॥ अन्येतुलग्नसमयेपाणिग्रहणमिच्छंति ॥
ततोंतःपटमपसार्यवरोवधूमुखमीक्षेत ॥ अत्रवाग्निंप्रतिष्ठाप्यपश्चादग्नेस्तृणफलंकटंवानिधायकन्यापितृदत्तवस्त्र-
चतुष्टयमध्येद्वेआयुष्मतदिंवासः परिधत्स्वेतिआवृत्त्यादद्यात् ॥ साचवाससेनमइत्यावृत्त्यापरिदध्यात् ॥ ततो
दात्रावधूमीक्षस्वेतिप्रेषितोवधूमीक्षेत ॥ ततः कन्यादानमितिहरिहरः ॥ अन्येतुकन्यादानोत्तरंवस्त्राद्याहुः॥ ततः
करोतुस्वस्तितेब्रह्मेत्याद्यैरक्षतारोपणांतेकन्यापितोदङ्मुखः स्वदक्षिणेपत्नीमुपवेश्यकुशपाणिराचम्यदेशकालौ

संकीर्त्य ममसमस्तपितॄणांनिरातिशयसानंदब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तयेऽनेनवरेणास्यां
कन्यायामुत्पादयिष्यमाणसंतत्याब्राह्मपक्षेद्वादशावरान्द्वादशापरान्प्राजापत्यपक्षेष्टावरानअष्टापरान्पुरुषान्पवित्री
कर्तुमात्मनश्चलक्ष्मीनारायणप्रीतयेब्राह्मविवाहविधिनाप्राजापत्याविधिनावालंकृत्यकन्यादानमहंकरिष्ये ॥ इ-
त्युक्त्वापठेत् ॥ कन्यांकनकसंपन्नांकनकाभरणैर्युतां ॥ दास्यामिविष्णवेतुभ्यंब्रह्मलोकजिगीषया ॥ विश्वंभराः
सर्वभूताः साक्षिण्यः सर्वदेवताः ॥ इमांकन्यांप्रदास्यामिपितॄणांतारणायचेति ॥ ततः कांस्यपात्रेवरहस्तो-
परिवधूहस्तेस्वहस्तंन्यस्यवरहस्तेसुप्रोक्षितमस्तु॥शिवाआपःसंतुसौमनस्यमस्तु इत्युक्त्वाकन्यातारयतुपुण्यंवर्ध-
तांशांतिः पुष्टिस्तुष्टिश्चास्तु ॥ तिथिकरणमुहूर्तनक्षत्रसंपदस्तु ॥ पुण्याहंभवंतोब्रुवंतु ॥ पुण्याहमितिविप्राः ॥
स्वस्तिभवंतोब्रुवंतु ॥ ऋद्धिंभवंतो॰ श्रीरस्त्वितिभवंतो॰ अमुकदासोहं ममसमस्तपितॄणामित्यादिलक्ष्मीनारा-
यणप्रीतयेइत्यंतंप्राग्वदुक्त्वाकाश्यपगोत्रस्यब्रह्मदासस्यप्रपौत्रायविष्णुदासस्यपौत्रायशिवदासस्यपुत्रायकाश्यप -
गोत्रायदेवदत्तदासायवरायकाश्यपगोत्रांचैत्रदासस्यप्रपौत्रींमैत्रदासस्यपौत्रींभोजदासस्यममपुत्रीममुकप्रेष्यांना -
म्नींवाकन्यांप्रजापतिदैवत्यांयथाशक्त्यलंकृतामित्युक्त्वापुनरेवंद्विरुच्चार्यशतज्योतिष्टोमातिरात्रफलसमफलप्रा-



प्तिकामः प्रजोत्पादनार्थं सहधर्मचरणार्थंप्राजापत्येसहधर्मंचरितुंभार्यात्वेनतुभ्यमहंसंप्रददइतिकुशयवयुतंजलंक-
न्याहस्तंचवरहस्तेक्षिपेत् ॥ मयापिदत्तेतिमातापिवदेदितिकेचित् ॥ गोत्रोच्चारणंनेतिकेचित् ॥ वरः प्रतिगृह्णा-
मिस्वस्तीत्युक्त्वा भुवंस्पृशेत् ॥ गौरींकन्यामिमांभोस्त्वंयथाशक्तिविभूषितां ॥ गोत्रायचैवदासायतुभ्यंदत्तांसमा-
श्रय ॥ कन्येममाग्रतोभूयाःकन्येमेदेविपार्श्वयोः॥ कन्येमेपृष्ठतोभूयास्त्वद्दानात्स्वर्गमाप्नुयां ॥ ममवंशेतुयाजातापा-
लितावत्सराष्टकम् ॥ तुभ्यंदासमयादत्तापुत्रपौत्रविवर्द्धिनी इतिपठेत् ॥ ततःकन्यादानप्रतिष्ठार्थमिदंसुवर्णगोमिथु-
नंचदाक्षिणांसंप्रददेइति दद्यात् ॥ ततः शक्तौसत्यांताम्रकांस्यपात्रगवाश्वदासीदासादिदद्यात् ॥ कन्याबांधवाश्चयौ-
तकंदद्युः ॥ वरंतत्पित्रादिभ्योपिदद्युरितिकेचित् ॥ होमांतेयौतकंकेचिदाहुः॥ ततःचतुर्वारंपंचवारंवावधूवरौसूत्रेणा-
वेष्ट्योपरितनमधोमार्गेणाधस्तनंचोपरिनिष्कास्यत्रिगुणंपीतंच्चकृत्वाधस्तनंवरहस्तेउपरितनंचवधूहस्तेकंकणंबध्नी-
यात् ॥ येनबद्धोबलीराजादानवेंद्रोमहाबलः॥ तेनत्वामपिबध्नामिरक्षेमाचलमाचलेति ॥ ततःवधूवराभ्यांदुग्धार्द्रा-
क्षतारोपणं ॥ वध्वादौततोवरेणचकार्यं ॥ मंत्रास्तु भगायनमः यज्ञायनमः श्रियैनमः धर्मायनमः प्रजायैनमः
यशसेनमः इति ततः प्राङ्मुखउपविश्यवस्त्रेकन्यायैदद्यात् ॥ साचवासोभ्यानमइतिपरिदध्यात् ॥ ततोवरोमां-

गल्यतंतुनानेनभर्तृजीवनहेतुना ॥ कंठेबध्नामिसुभगेत्वंजीवशरदांशतमितिसौभाग्यंतंतुंवधूगलेबध्नीयात्ततो-
विश्वेदेवायुमातविश्वधातृभ्योनमइतिवधूमीक्षेत ॥ अत्रवाकौसुंभसूत्रेणकंकणम् ॥ ततोवेद्यांप्राङ्मुखौतेजनावी-
रणकटेपश्चादग्नेरुपविश्यदक्षिणेईशान्यांवामंगलकुंभंस्कंधेगृहीत्वाकश्चित्तिष्ठेदासप्तमंपदं उत्तरतोदृषदुपलेचालं-
कृतेनिधायात्रवरः कन्यानाम वदेदित्याचारः ॥ ततोवधूपित्रापरस्परंसमीक्षितव्यामित्युक्तेन्योन्यंसमीक्ष्य ॥ अघो-
रचक्षुरपतिघ्नीशिवाचसुमनास्तथा ॥ सुवर्चाः पुत्रसूर्देवकामाचसुखदाभवेतिवरोवदेत् ॥ सोमगंधर्वाग्निपूषभ्यो
नमइतिच ॥ शूद्राणांगृह्यसूत्राध्ययनाभावात्तदुक्तहोमांगकलापज्ञानाभावात्प्रयुक्तिशक्त्यभावाच्च विवाहेहोम
एवनास्तीतिमदनपालः ॥ अन्येतुप्रधानेधिकारसिद्धौस्थपतीष्टिवदंगेपिश्रवणोपदेशादिनाज्ञानसंभवाद्धोममा-
हुः ॥ यथा गुरुर्दक्षिणेब्रह्मासनंदत्वातमुपवेश्यमृन्मयेपात्रेजलपूर्णेकुशान्निधायोत्तरतः ॥ कुशेषुनिधायाग्निंदर्भैः
पूर्वादिपरिस्तीर्यासादनंकुर्यात् ॥ त्रीणितृणानि द्वेपवित्रे प्रोक्षणी आज्यस्थाली चरुस्थालीसंमार्गकुशा उपयमन-
कुशास्तिस्रः समिधः स्रुव आज्यतंदुला लाजाः शूर्पसंस्रवपात्रंअश्माआनुडुहंचर्मगौर्दक्षिणेति ॥ ततःप्रादेशमात्रे-
पवित्रेछित्वाप्रोक्षणींसंस्कृत्यपवित्राभ्यामुत्पूयतत्रतेनिधायदक्षिणेनसव्येकृत्वोर्द्दिंगनं कृत्वापात्राणिप्रोक्ष्यनिधाया-

ज्यंस्थाल्यांनिरूप्याग्नौदक्षिणेधिश्रित्योल्मुकेनलाजैः सहपर्यग्निकृत्वास्रुवंप्रतप्यकुशैःसंमृज्यप्रोक्षणीभिःप्रोक्ष्यपुनः
प्रतप्यदक्षिणेनिधायाज्यमुद्वास्योत्पूयावेक्ष्यशूकंनिरस्यपुनःप्रोक्षणीरुत्पूयावेक्ष्योपयमनकुशानादायोत्थायाग्नौतिस्रः
समिधोभ्याधायप्रोक्षणीभिः पर्युक्ष्यवरेणान्वारब्धोगुरुर्दक्षिणंजान्वाच्यब्रह्मणादक्षिणहस्तेनान्वारब्धः स्रुवेणजुहु-
यात् ॥ प्रजापतयेनम इंद्रायनम इत्याघारौ ॥ इदंप्रजापतयेनममेत्यादिवरः सर्वत्रत्यागं कुर्यात् ॥ अग्नयेनमः
सोमायनमइत्याज्यभागौ ॥ अग्नयेनमः वायवे० सूर्याय० अग्नीवरुणाभ्यां० द्विः अग्नयेन० वरुणसवितृवि-
ष्णुविश्वेदेवमरुत्स्वर्केभ्योनमः ॥ वरुणायादित्यायादितयेप्रजापतयेनमः इतिनवा ॥ ततस्त्रिरग्नयेमृत्यवेचजुहु-
यान्नवा ॥ ततः कन्यांजलावुपस्तीर्यवध्वा भ्राततत्स्थानोवान्यः शमीपलाशमिश्रान्लाजान्शूर्पादंजलिनाद्विः
क्षिपतितत्तोभिघार्यतिष्ठंती अग्नयेनमइतित्रिर्जुहुयात् ॥ मंत्रोवरस्यैव ॥ ततोवरोवध्वादक्षिणंहस्तंसांगुष्ठमुत्ता-
नमुत्तानेनहस्तेनगृह्णीयात् ॥ तत्रमंत्रः ॥ भगार्यमसवितृभ्योनमः वित्तसौम्यगुणैर्युक्तावीरसूर्जीवसूर्भव ॥ कुलेम-
दीयेसम्राज्ञीमच्चित्तानुगतासदेति ॥ ततोगृहीतामेववधूमुत्तरतोग्नेर्दक्षिणेनपादेनाश्मानमारोहयति ॥ कन्यायैनम
इतितत: सरस्वत्यैनमइति ॥ गाथागायंती ॥ ततोग्नयेनमइतिअग्निंपरिक्रम्यपुनर्द्विर्लाजादिपरिक्रमांतंकृत्वाचतु-

र्थेशूर्पपुटेनवधूभ्रातासर्वंलाजांन्कन्यांजलावावपति ॥ तान्भागायनमइतितिष्ठंतीजुहोति ॥ ततोग्निंचतुर्थेंपरिक्र-
म्योपविश्यब्रह्मान्वारब्धः प्रजापतयेनमइतिहुत्वोत्तरतःउदक्संस्थान्सप्ततंडुलपुंजान्कृत्वावधूंविष्णवेनमइतिद-
क्षिणेनपदावरःसप्तपदानिक्रामयति ॥ इषेनमःविष्णवेनमः सर्वत्र ऊर्जे० रायस्पोषाय० मायोभव्याय०प्रजाभ्यो०
पातुभ्यो० सखिभ्यो० नमइतिएतैरितिकेचित् ॥ ततः सप्तमेपदेगुरुद्वयोः शिरसीसन्निधायपूर्वकुंभोदकेनवरआ-
म्रपल्लवैरभिषिंचेत् ॥ वरेणसूर्यमुदीक्षस्वेत्युक्त्वासूर्यायनमइतिसूर्यंपश्येत् ॥ ममतवचित्तवाग्भ्योनमइतिवधूद-
क्षिणांसोपरिहस्तंनीत्वाहृदयमालभ्यउत्तरतोवधूमुपवेश्यवध्वैनमइत्यभिमंत्र्यतस्याः सीमंतेसिंदूरंदत्वान्योव-
रोवावधूमुत्थाप्यगोश्वपुरुषेभ्योनमइत्यानडुहेरक्तचर्मणिवधूमुपवेश्याग्नयेस्विष्टकृतेनमइतिहुत्वासंस्रवप्राशनं ॥
प्रणीतानांपवित्राभ्यांमार्जनं ॥ तयोरग्नौक्षेपः ॥ आचार्यायगोदानंप्रणीताविमोकः ॥ ब्रह्मणेपूर्णपात्रंविप्रेभ्य
आमान्नसंकल्पः ॥ दिनेविवाहेरात्रौध्रुवमुदीक्षस्वेतिवरप्रेषितावधूर्ध्रुवायनमइतिपश्येत् ॥ ततोब्दंद्वादशरात्रंषड्-
रात्रंत्रिरात्रंवाऽक्षारालवणाशिनौब्रह्मचारिणावलंकुर्वाणावधःशायिनौदंपतीस्याताम् ॥ तैलाक्षतचंदनादि यथा-
चारंकुर्यात् ॥ चतुर्थ्यामपररात्रेपंचभूसंस्कारान्कृत्वाविवाहाग्निंसंस्थाप्यब्रह्मोपवेशनादिसमिदाधानांतंप्राग्वत्कु-



र्यात् ॥ तत्राज्यंनिरूप्यस्थाल्यांतूष्णींचतुर्निरूप्यतथैवात्रिः प्रोक्ष्यात्रिः प्रक्षाल्याग्नौपक्त्वासमिधोभ्याधायाग्निंपर्यु-
क्ष्याघाराज्यभागांतेग्नयेप्रायश्चित्तायनमः ॥ एवंवायवे० सूर्याय० चंद्राय० गंधर्वाय० नवाहुत्यंतेप्रजापतये
नमइतिचरुंहुत्वोदकुंभात्संस्रवानादायाग्निवायुसूर्यचंद्रनक्षत्रगंधर्वप्रजापतिभ्योनमइतिवधूशिरसिदत्वा ॥ ममव्र-
तानुसारिणीभवेत्युक्त्वोत्तरतोग्नेश्चरुशेषंप्राणेभ्योनमः अस्थिभ्यो० मांसेभ्यो० त्वचेनमइतिवधूंप्राशयित्वाता-
माचमय्याज्येनाग्नयेस्विष्टकृतेनमइतिहुत्वा ॥ अग्न्यादिप्रजापत्यंतानवाहुतयः ॥ प्राशनार्थभिन्नपात्रेसंस्रवाः ॥
संस्रवप्राशनंमार्जनंपवित्रप्रतिपत्तिर्गुरवेदक्षिणाब्रह्मणः पूर्णपात्रमामान्नदानंचेति ॥ स्मृतिकौमुद्यांतु ॥ शूद्रस्य
कोपिहोमोनेत्युक्तम् ॥ तन्न साम्प्रतापिहितेनैक्यंगतामंत्राहुतिव्रतैरित्यस्यशूद्रेप्यविशेषात् ॥ ततोवरस्यतत्पक्षी-
याणांपूजनंवरमात्रेवंशपात्रदानंचकार्यं ॥ कन्यापित्रेतिकेचित् ॥ षोडशलघुशूर्पयुतवंशपात्रेउमामहेश्वरौसंपू-
ज्यप्रार्थयेत् ॥ ऐरिणित्वमुमादेवीमहेशोगिरिजापतिः ॥ अतस्त्वांपूजयिष्यामिऐरिणींसर्वकामदां ॥ सवस्त्रांचसदी-
पांचशूर्पैः षोडशभिर्युताम् ॥ वरमात्रेप्रदास्यामिकन्यादानस्यसिद्धये ॥ इत्युक्त्वा कृतस्यकन्यादानस्यपूर्णफ-
लप्राप्त्यर्थमिदंवंशपात्रंवरमात्रेसंप्रददे नममेत्युक्त्वापठेत् ॥ वंशोवंशकरः श्रेष्ठोवंशोवंशविवर्द्धनः ॥ अनेनवंश-

दानेनतुष्टोऋद्धिंकरोतुमे ॥ वंशपात्रमिदंपुण्यंवंशजातसमुद्भवं ॥ दानानामुत्तमंदानमतः शांतिंप्रयच्छमेइति ॥
इदंकेचिन्नकुर्वंति ॥ ततः कन्यापिता अष्टवर्षा त्वियंकन्यापुत्रवत्पालितामया ॥ इदानींतुमयातुभ्यंदत्तास्नेहेन
पाल्यतामितिपितावरांकेवधूमुपवेशयेत् ॥ ततोवरोयानेनवध्वासहगृहंगत्वातत्रश्रियंसंपूज्य ॥ स्थापितानांमातृ-
णांमंडपदेवतानांचपूजांकृत्वाविसृज्यवस्त्रग्रंथिकंकणमोक्षौकृत्वाविप्रान्पूजयेत् ॥ वध्वागृहप्रवेशेमंडपोद्वासने
कालोन्यश्चविशेषोमत्कृतेनिर्णयसिंधौज्ञेयः ॥ एतेसंस्काराः सच्छूद्राणां ॥ एवंवक्ष्यमाणमान्हिकाद्यपितेषांनि-
यतं ॥ असच्छूद्राणांविवाहमात्रम् ॥ ॥ इतिश्रीमन्नारायणभट्टसूनुकमलाकरभट्टकृतेशूद्रधर्मतत्वेशूद्रसं-
स्काराः ॥ अथशूद्रस्याह्निकमुच्यते ॥ तत्रविष्णुः ॥ ब्राह्मेमुहूर्तेउत्थायेति ॥ विष्णुधर्मे ॥ शयनादुत्थितो
यस्तुकीर्तयेन्मधुसूदनम् ॥ कीर्त्तनात्तस्यपापानिनाशमायांत्यशेषतः ॥ तत्राचम्यपितरौइष्टदेवंचनत्वा० ॥ प्रातः
स्मरामिभवभीतिमहार्तिशांत्यैनारायणंगरुडवाहनमब्जनाभं ॥ ग्राहाभिभूतवरवारणमुक्तिहेतुंचक्रायुधंतरुणवा-
रिजपत्रनेत्रं ॥ १ ॥ प्रातर्नमामिमनसावचसाचमूर्ध्नापादारविंदयुगुलंपरमस्यपुंसः ॥ नारायणस्यनरकार्णवतारणस्य
पारायणप्रवणविप्रपरायणस्य ॥ २ ॥ प्रातर्भजामिभजतामभयंकरंतंप्राक्सर्वजन्मकृतपापभयापहत्यै ॥ योग्राहव-
क्त्रपतितांघ्रिगजेंद्रघोरशोकप्रणाशमकरोद्धृतशंखचक्रः ॥ ३ ॥ श्लोकत्रयमिदंपुण्यंप्रातःप्रातस्तुयःपठेत् ॥ लोक-
त्रयगुरुस्तस्मैदद्यादात्मपदंहरिः ॥ प्रातःस्मरामिशिवमेकमनेकमाद्यमित्यादियथावासनंपठित्वा ॥ पुण्यश्लोकोनलो
राजापुण्यश्लोकोयुधिष्ठिरः ॥ पुण्यश्लोकाचवैदेहीपुण्यश्लोकोजनार्दन इत्युक्त्वाभूमिंनमस्कृत्यअंतर्धायतृणैर्भू-
मिंशिरःप्रावृत्यवाससा ॥ वाचंनियम्ययत्नेननिष्ठीवोच्छ्वासवर्जितः ॥ कुर्यान्मूत्रपुरीषेतुशुचौदेशेसमाहितइत्यं
गिरसोक्तविधिना ॥ दिवासंध्यासुउदङ्मुखः ॥ कुर्यान्मूत्रपुरीषेतुरात्रौचेद्दक्षिणामुखः ॥ ग्रामात्पदशतंगच्छेन्नग-
राच्चचतुर्गुणमितियाज्ञवल्क्यपराशराद्युक्तेदेशेमूत्रपुरीषेकृत्वा अपकृष्यचविण्मूत्रंकाष्ठलोष्ठतृणादिनेतिभरद्वा-
जोक्तेर्लोष्ठादिनावामेनगुदंप्रमृज्य गृहीतशिश्नश्चोत्थायमृद्भिरभ्युद्धृतैर्जलैः ॥ गंधलेपक्षयकरंशौचंकुर्याद्दतं-
द्रितइतियाज्ञवल्क्योक्तेः शौचंकुर्यात् ॥ तत्रमूत्रेशातातपः ॥ एकालिंगेकरेसव्येतिस्रोद्वेहस्तयोर्द्वयोः ॥ मूत्रे
शौचंसमाख्यातंशुक्रेतद्द्विगुणंभवेत् ॥ पुरीषेतुदक्षयमौ ॥ द्वेलिंगेमृत्तिकेदेयेगुदेपंचकरेदश ॥ उभयोःसप्तदा-
तव्याम्मृदःशौचोपपादिकाः ॥ शंखः ॥ मेहनेमृत्तिकाःसप्तलिंगेद्वेपरिकीर्तिते ॥ एकस्मिन्विंशतिर्हस्तेद्वयोर्ज्ञेया-
श्चतुर्दश ॥ एकोवामः ॥ तिस्रस्तुमृत्तिकादेयाः कर्तुर्वैनखशोधनम् ॥ तिस्रस्तुपादयोर्ज्ञेयाः शौचकामस्यसर्व-

दा ॥ विष्णुपुराणे ॥ एकालिंगेगुदेतिस्रो दशवामकरेतथा ॥ उभयोःसप्तदातव्याम्मृदः शौचोपपादिकाः ॥ अ-
त्रलेपन्यूनाधिकभावाभ्यांगृह्यपत्यादिपरतयाव्यवस्था ॥ मूत्रेमृत्परिमाणमाहदक्षः ॥ लिंगेतुमृत्समाख्यातात्रि-
पर्वपूर्यतेयथा ॥ गुदेतुमनुः ॥ अर्धप्रसृतिमात्रातुप्रथमामृत्तिकास्मृता ॥ द्वितीयाचतृतीयाचतदर्धार्धाप्र-
कीर्तिता ॥ आदित्यपुराणे ॥ स्त्रीशूद्रयोरर्धमानंशौचंप्रोक्तंमनीषिभिः ॥ उक्तशौचेनगंधानपगमे
तुदेवलः ॥ यावत्साध्विवतिमन्येततावच्छौचंविधीयते ॥ दक्षः ॥ यद्दिवाविहितं शौचंतदर्धंचनिशि
स्मृतं ॥ तदर्धमातुरेप्रोक्तमातुरस्यार्धमध्वनि ॥ वृद्धपराशरः ॥ उपविश्यतुविण्मूत्रंकर्तुंयस्तन्नविंदति ॥ सकुर्या-
दर्धशौचंतुस्वस्यशौचस्यसर्वदा ॥ बालस्यानुपतीतस्यगंधलेपक्षयावहं ॥ ब्राह्मे ॥ नयावदुपनीयेताविप्रःशूद्र-
स्तथांगना ॥ गंधलेपक्षयकरंशौचंतेषांविधीयते ॥ प्रमाणंशौचसंख्यावानशिष्टैरुपपादितेति ॥ शूद्रेविवाहात्प्रा-
गेवं ॥ विवाहाभावेतुद्वादशवर्षोर्ध्वंषोडशवर्षोर्ध्वंवासर्वेधर्मानियताः ॥ नप्राक् ॥ एतच्चवक्ष्यामः भोजनेगुदस्रा-
वेबृहस्पतिः ॥ भुंजानस्यतुविप्रस्यकदाचित्प्रस्रवेद्गुदम् ॥ पूर्वंकृत्वातुशौचंतुततः पश्चादुपस्पृशेत् ॥ ततःकृ-
त्वोपवासंचपंचगव्येनशुध्यति ॥ हस्तंप्रक्षाल्यशौचंकृत्वागंडूषोत्तरमुपवसेदित्यर्थः ॥ विप्रस्येत्युपलक्षणम् ॥



इतिश्रीकमलाकरभट्टकृतेशूद्रधर्मकमलाकरेशौचाविधिः ॥ ॥ अथाचमनम् ॥ ॥ शुचौदेशेप्राङ्मुखउद-
ङ्मुखोवोपविश्यांतर्जानुकरंगोकर्णाकृतिंकृत्वातालुगाभिः शुद्धाभिरद्भिः सकृदाचमेत् ॥ त्रिर्वेतिस्मृतिकौमुद्यां ॥
अंगुष्ठमात्रंस्पृशेदितिभट्टाः॥ ततोंगुष्ठमूलेनोष्ठौद्विरुन्मृज्यांगुष्ठतर्जनीभ्यांनासिकेअंगुष्ठमध्यमाभ्यांचक्षुषीअंगुष्ठा-
नामिकाभ्यांश्रोत्रेअंगुष्ठकनिष्ठिकाभ्यांनाभिंपाणितलेनहृदयंसर्वैःशिरोंसौचस्पृशेत् ॥ अथदंतधावनम्॥ बदरोदुंब-
रापामार्गपनसकदंबाम्रजातीबिल्वप्रियंगुमयंकंटकीक्षीरिवृक्षोत्थं ॥ द्वादशांगुलकंविप्रेकाष्ठमाहुर्मनीषिणः॥ क्षत्रवि-
ट्शूद्रजातीनांनवषट्चतुरंगुलमितिमदनपारिजातेविष्णूक्तम्॥ कनिष्ठाग्रस्थूलंपर्वार्धकृतकूर्चं दंतधावनंप्रक्षाल्य॥
आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ॥ ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते इतिमंत्रेणप्राङ्मुखोभक्षयित्वादंता-
न्संशोध्यतथैवजिह्वोल्लेखंकृत्वाप्राच्यामुदीच्यांवात्यक्त्वाषोडशद्वादशवागंडूषान्कुर्यात् ॥ एतत्प्रतिपन्नवमीषष्ठ्य-
मापौर्णमासीचतुर्दश्यष्टमीसंक्रमश्राद्धव्रतरविदिनेषुनकार्यं॥ तत्रद्वादशगंडूषाः॥ ततःकेशप्रसाधनंकृत्वास्नायात्॥
छंदोगपरिशिष्टे ॥ यथाऽहनितथाप्रातर्नित्यंस्नायादनातुरः ॥ दंतान्प्रक्षाल्यनद्यादौगृहेचेत्तदमंत्रवत् ॥ स्मृति-
कौमुद्यांयोगियाज्ञवल्क्यः ॥ मृत्तिलान्गोमयंदर्भान्पुष्पाणिसुरभीणिच ॥ आहरेत्स्नानकालेतुस्नानार्थंप्रयतः

शुचिः ॥ गंगोदकातंगत्वातुसंस्थाप्यैतत्पृथक्क्षितौ ॥ त्रिधाकृत्वाम्रृदंतांतुगोमयंचविचक्षणः ॥ अधमोत्त-
ममध्यानामंगानांक्षालनंतुवै ॥ भागैः पृथक्पृथक्कुर्यात्क्षालनेमृदसंकरः ॥ अद्भिर्मृद्भिश्चचरणौप्रक्षाल्याचम्य
वैशुचिः ॥ अद्भिर्मृद्भिश्चगात्राणिक्रमशस्त्ववनेजयेत् ॥ एकयाशिरःप्रक्षाल्यद्वाभ्यांनाभेस्तथोपरि ॥ कटिबस्त्यूरु-
जंघेचचरणौचत्रिभिस्त्रिभिः ॥ प्रक्षाल्यहस्तावाचम्यनमस्कृत्यजलंतुतत् ॥ यत्किंचेदंतुमंत्रेणनमस्येत्प्रयतांज-
लिः ॥ ततःकातीयविधिनास्नानमुक्त्वाह ॥ ब्रह्मक्षत्रविशांत्वेवंमंत्रवत्स्नानमिष्यते ॥ तूष्णीमेवतुशूद्रस्यसनम-
स्कारकंमतं ॥ तेनशूद्राणांकातीयएवामंत्रस्नानविधिः ॥ मैथिलश्रीदत्तेनतुपाद्मोक्तंस्नानंसर्ववर्णसाधारणमुक्तं ॥
यथा ॥ अनुद्धृतैरुद्धृतैर्वाजलैः स्नानंसमाचरेत् ॥ तीर्थंप्रकल्पयेद्विद्वान्मूलमंत्रेणमंत्रवित् ॥ नमोनारायणायेति
मूलमंत्रउदाहृतः ॥ दर्भपाणिस्तुविधिनाह्याचांतः प्रयतः शुचिः ॥ चतुर्हस्तसमायुक्तंचतुरस्रंसमंततः ॥ प्रक-
ल्प्यावाहयेद्गंगामेभिर्मंत्रैर्विचक्षणः ॥ विष्णोः पादप्रसूतासिवैष्णवीविष्णुपूजिता ॥ पाहिनस्त्वेनसस्तस्मादाज-
न्ममरणांतिकात् ॥ तिस्रः कोट्योर्धकोटीचतीर्थानांवायुरब्रवीत् ॥ दिविभुव्यंतरिक्षेचतानितेसंतिजान्हवि ॥
मेदिनीत्येवतेनामदेवेषुनलिनीतिच ॥ वृंदापृथ्वीचसुभगा विश्वकायाशिवासिता ॥ विद्याधरीसुप्रसन्नातथा





लोकप्रसादिनी ॥ वेण्याचजान्हवीचैवशांताशांतिप्रदायिनी ॥ एतानिपुण्यनामानिस्नानकालेप्रकीर्तयेत् ॥ भ-
वेत्सन्निहितातत्रगंगात्रिपथगामिनी ॥ विप्रेणवायंपठनीयः ॥ सप्तवाराभिजप्तेनकरसंपुटयोजितम् ॥ प्रागु-
क्तमूलमंत्रेणेत्यर्थः ॥ मूर्ध्निकुर्याज्जलंभूयस्त्रिचतुःपंचसप्तवा ॥ स्नानंकुर्यान्मृदापश्चादामंत्र्यचाविधानतः ॥ अ-
श्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे ॥ शिरसाधारयिष्यामिरक्षस्वमांपदेपदे ॥ उद्धृतासिवराहेणकृष्णेनशतबाहु-
ना ॥ मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतम् ॥ नमस्तेसर्वलोकानांप्रभवारणिसुव्रतेइति ॥ एतत्पूर्वोक्तवच-
नेशूद्रस्यविशेषोक्तेरत्रतदभावात्पुराणमंत्रपाठेशूद्रस्यानाधिकाराच्चचिंत्यं ॥ सत्त्वेपिसर्वेषांपूर्वोक्तेनास्यसमुच्चयइ-
तितत्त्वं ॥ नृसिंहपुराणे ॥ नद्यांस्रवत्सुचस्नायात्प्रतिस्रोतः स्थितोद्विजः ॥ तडागादिषुतोयेषुप्रत्यर्कंस्नानमा-
चरेत् ॥ कातीयानांनद्यामपिसूर्यमुखस्यस्नानम् ॥ तत्रैवब्रह्मांडपुराणे ॥ ऊर्ध्वपुंड्रंद्विजः कुर्यात्क्षात्रियस्तुत्रि-
पुंड्रकं ॥ अर्धचंद्रं तुवैश्यस्य वर्तुलं शूद्रजातिषु ॥ इत्युक्तम् ॥ ललाटशिरःकंठबाहुहृदयनाभिपृष्ठपार्श्वद्वयेषु
तिलकंकृत्वाकुशासनोपविष्टःनमोनमइतित्रिर्जपेत् ॥ अथतर्पणं ॥ व्यासः एकैकमंजलिंदेवाद्वौद्वौतुसनकाद-
यः ॥ अर्हंतिपितरस्त्रींस्त्रीन्स्त्रियस्त्वेकैकमंजलिं ॥ मातृवर्गेंजलित्रयमेकैकस्याः ॥ विष्णुपुराणेतु ॥ त्रिरधःप्रीण-

नार्थायदेवानामपिनिर्वपोदितिदैवेत्रयउक्ताः ॥ पाद्मे ॥ देवान्ब्रह्मऋषिन्सर्वांस्तर्पयेताक्षतोदकैः ॥ तर्पयेत पितॄन्भक्त्यासतिलोदकचंदनैः ॥ शंखः ॥ सौवर्णेनराजतेनौदुंबरेणश्रृंगपात्रेणकुशेनवाप्युदकंपितृतीर्थस्पृशन्दद्यात् ॥ योगियाज्ञवल्क्यः ॥ तिलानामप्यलाभेतुसुवर्णरजतान्वितम् ॥ तदभावेनिषिंचेत्तुदर्भैर्मंत्रेणवाप्यथ ॥ तृप्यध्वमितिसमुच्चार्यतृप्यतामित्यथापिवा ॥ विधिज्ञोनिक्षिपेत्तोयंदेवादीनामशेषतः ॥ सव्यंजानुततोन्वाच्यसतिलंदक्षिणामुखइतितस्यैवोक्तेर्देवर्ष्योर्दक्षिणजानुपातः सिद्धः ॥ यमः द्वौहस्तौयुग्मतः कृत्वापूरयेदुदकांजलिं ॥ गोशृंगमात्रमुद्धृत्यजलमध्येजलंक्षिपेत् ॥ दक्षः ॥ अग्नेस्तुतर्पयेद्देवान्मनुष्यान्कुशमध्यतः ॥ पितॄंस्तुकुशमूलाग्रैर्विधिः कौशोयथाक्रमम् ॥ मदनपारिजातेयोगियाज्ञवल्क्यः ॥ ब्रह्माणंतर्पयेत्पूर्वंविष्णुंरुद्रंप्रजापतिं ॥ देवांश्छंदांसिवेदांश्चऋषींश्चैवसनातनान् ॥ आचार्यांश्चैवगंधर्वानाचार्यतनयांस्तथा ॥ संवत्सरंसावयवंदेवीश्चाप्सरसस्तथा ॥ तथादेवानुगान्नागान्सागरान्पर्वतानपि ॥ सरितोथमनुष्यांश्चयक्षान्रक्षांसिचैवहि ॥ पिशाचांश्चसुपर्णांश्चभूतान्यथपशूंस्तथा ॥ वनस्पतीनोषधीश्चभूतग्रामंचतुर्विधं ॥ विष्णुः ॥ ततः कृत्वानिवीतंतुयज्ञसूत्रमतंद्रितः ॥ प्राजापत्येनतीर्थेनमनुष्यांस्तर्पयेत्पृथक् ॥ कार्ष्णाजिनिः ॥

सनकः सनंदनश्चतृतीयश्चसनातनः ॥ कपिलश्चासुरिश्चैववोढःपंचशिखस्तथा ॥ पाद्मेऽस्यानंतरं ॥ मरीचिमत्र्यंगिरसौपुलस्तिंपुलहंक्रतुं ॥ प्राचेतसंवसिष्ठंचभृगुंनारदमेवच ॥ योगियाज्ञवल्क्यः॥ अपसव्यंततः कृत्वा भूत्वाच पितृदिङ्मुखः ॥ पितॄन्दिव्यानदिव्यांश्चपितृतीर्थेनतर्पयेत् ॥ दिव्यांबरधरोध्रुवइत्यादयोवसवः ॥ अजैकपादादयोरुद्राइंद्रधात्रादयआदित्याश्चप्रत्येकंसमुदितावा ॥ सएव ॥ कव्यवाडनलंसोमंयममर्यमणंतथा ॥ अग्निष्वात्ताः सोमपाश्चतथाबर्हिषदोपिच ॥ यदिस्याज्जीवत्पितृकएतान्विद्यात्तदापितॄन् ॥ तर्पणे यद्यप्यनेकप्रकाराः स्मृतिकौमुद्यां पाद्मादावुक्तास्तथापि कात्यायनसूत्रसंवादाच्छूद्रा वाजसनेयिन इति गौडोक्तदक्षसंवादात्स्नानादौदर्शनाच्चयोगियाज्ञवल्क्योक्तएवायंप्रकारःशूद्राणामितितत्त्वं ॥ एवंवैश्वदेवाद्यपिकातीयमेव ॥ अथप्रयोगः ॥ यथा मृद्गोमयकुशतिलपुष्पाक्षतानादायनद्यादौगत्वापाणिपादंप्रक्षाल्यानामिकाभ्यामेककुशपत्रात्मकेपवित्रे धृत्वाकुशोपग्रहः ॥ ऊर्ध्वकेशिविरूपाक्षिमांसशोणितभोजने ॥ तिष्ठदेविशिखाबंधेचामुंडेह्यपराजिते ॥ इत्युक्त्वा शिखांबध्वाचम्यदेशकालौस्मृत्वाममसर्वपापक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रातःस्नानमहं करिष्ये ॥ तीर्थेतु सागरस्वननिर्घोषदंडहस्तासुरांतक ॥ जगत्स्रष्टर्जगन्मर्दिन्नमामित्वांसुरेश्वर॥तीक्ष्णदंष्ट्रमहाकायकल्पांतदहनोपम ॥ भै-

रवायनमस्तुभ्यमनुज्ञांदातुमर्हसीतिसंप्रार्थ्य ॥ वरुणायनमइतिजलमालभ्यतेनैवावर्त्यनमोद्भ्योममपापंयात्वित्यं-
जलिं बहिः क्षिप्त्वाऽमुकतीर्थाय नम इत्यंजलिंदत्वामृदमादायकटिंबस्त्यूरुजंघापादकरांस्त्रिर्विलिप्यप्रक्षाल्यैकं
जलेपरंस्थलेपादंकृत्वाविष्णवेनमइतिसर्वांगंमृदालिप्त्वा सूर्याभिमुखोद्विस्त्रिर्द्वादशवानिमज्ज्याद्भ्योनम इत्युन्म-
ज्ज्यनिमज्ज्योन्मज्ज्याचम्यतथैवरुद्रायनमइतिगोमयेनालिप्यस्नात्वाचम्यकुशैर्मार्जयेत् ॥ वरुणायनमइत्यष्टवारं
परमात्मनेनमः अग्नयेनमः वायवेनमः सूर्यायनमः सवित्रेनमः यज्ञायनमइतिनिमज्याद्भ्योनमइतिद्वाविंशतिवारं
यद्वाग्नयेनमइतित्रिर्जातवेदसेसवित्रे चित्यादिभ्योनमइतिसवित्रेइत्येतैर्नाभित आनाभि दर्भैः पावयित्वापरमा-
त्मनेनमइतिसावित्रेनमइत्यंतैः पुनः पावयित्वानमइतित्रिः परमात्मनेनमइतिवाअघमर्षणंकृत्वास्नात्वा विष्ण-
वेनमइतिस्मृत्वाब्रह्मादिदेवास्तृप्यंतांनमइतिवादेवतीर्थेनात्रिःसव्येनदेवान्निवीतीकृष्णद्वैपायनादिऋषयस्तृप्यंता-
मितिद्वौद्वावित्यृषीनपसव्येनसोमापितृमदादिपितरस्तृप्यंतामित्यंजलित्रयं त्रिर्दत्वाधौतेवाससीपरिधायमृदोरूकरौ
प्रक्षाल्याचम्यवेणुपत्राकारमर्धचंद्रंवर्तुलंवातिलकंकृत्वामुद्रादिकृत्वाधृत्वावानमोब्रह्मणेविष्णवेसवित्रेमित्रायवरु-
णायदिग्भ्योदिग्देवताभ्य इतिप्रत्येकंजलपुष्पांजलिरित्याचार्यचूडामणिः ततउदितंसूर्यंरक्तचंदनाक्षतपुष्पैरष्टदले

मंडलेभ्यर्च्यतद्युक्तमर्घ्यंनमोविवस्वतेतुभ्यंभास्वतोविष्णुतेजसे ॥ नमः सवित्रेशुचयेसवित्रेकर्मदायिने इत्यर्घ्यंद-
द्यादितिकल्पतरौ ॥ उदितंसूर्यंरक्तचंदनाक्षतपुष्पैरभ्यर्च्य तद्युतमंजलित्रयंदद्यादितिकल्पतरौ ॥ ततः सूर्यमंडल-
स्थायपरमात्मनेनम इतिपुनरर्घ्यंदत्वा ब्रह्मविष्णुरुद्रेभ्योनमइतिवा ॥ विष्णुशिवनामादिवायथाशक्त्यावर्त्य नमः
सवित्रेजगदेकचक्षुषेजगत्प्रसूतिस्थितिनाशहेतवे ॥ त्रयीमयायात्रिगुणात्मधारिणेविरिंचिनारायणशंकरात्मनेनम
इतिनमस्कुर्यात् ॥ ॥ एवंस्नानंप्रातर्मध्यान्हेचकार्यं ॥ अशक्तौमध्यान्हएव ॥ गृहेउष्णोदकेनस्नानेप्येवं ॥ आतु-
रत्वादिनास्नानाशक्तौदर्भैर्मार्जनंभस्मस्नानंगोरजसावार्द्रवस्त्रेणांगमार्जनंकार्यं ॥जाबालिः॥ अशिरस्कंभवेत्स्ना-
नंस्नानाशक्तौतुकर्मिणां ॥ आर्द्रेणवाससावापिमार्जनंदैहिकंविदुः ॥ विद्वत्सरस्वतीप्राप्तंस्नानंसारस्वतंविदुः ॥
विप्रवाक्येनेत्यर्थः ॥ मार्जनंमानसंवास्नानंकार्यं ॥ यथा ॥ ॥ ध्यायेदादित्यसंकाशंवासुदेवंचतुर्भुजं ॥ शं-
खचक्रगदापद्मवनमालाविराजितं ॥ तत्पादोदकजांधारांनिपतंतींस्वमूर्धनि ॥ चिंतयेद्ब्रह्मरंध्रेण प्रविशंतींस्वकां
तनुं ॥ तयासंक्षालयेत्सर्वमंतर्देहगतंमलम् ॥ तथा ॥ अपवित्रः पवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुं-
डरीकाक्षंसबाह्याभ्यंतरेशुचिरिति ॥ ततः कांस्यपात्रेआज्यप्रतिबिंबमवलोक्य आज्यंतेजः समुद्दिष्टमाज्यंपा-

पहरंस्मृतं ॥ आज्यंसुराणामाहारआज्येलोकाः प्रतिष्ठिताः ॥ कामधेनुषुसंभूतंसर्वक्रतुषुसंस्थितं ॥ देवाना-
माज्यमाहारस्ततः शांतिंप्रयच्छमेइतितिविप्रायदत्वादक्षिणांदद्यात् ॥ एतद्विष्णुधर्मोत्तरेस्पष्टं ॥ ततोमध्यान्हेपूर्व-
वत्स्नात्वाब्रह्मयज्ञंकुर्यात् ॥ तत्रयद्ब्राह्मणानीतिहासान्पुराणानिकल्पानितिश्रुतेर्वेदाथर्वपुराणानिसेतिहासानिश-
क्तितः ॥ जपयज्ञप्रसिध्यर्थंविद्यांचाध्यात्मिकींजपेत् इतियाज्ञवल्क्योक्तेश्चपुराणभारतादिपाठविधानेऽपिशूद्रस्य
पाठाप्रसक्तेः श्रवणस्यैवकर्मांगत्वात्पुराणश्रवणमेवब्रह्मयज्ञमितिकेचित् ॥ तन्न नमस्कारेणमंत्रेण पंचयज्ञान्न
हापयेदितियाज्ञवल्क्योक्तेन नमस्कारेणतस्यबाधात् ॥ तत्रयोनमसास्वध्वरइतिश्रुतेर्यज्ञोवैनमइतिहिब्राह्मणंभव-
तीतिवचनाच्चनमोनमोनमइतितिर्जपेदितिस्मृतिकौमुद्यामुक्तं ॥ तत्त्वंतुवेदादीनामर्थबोधेस्वरूपस्यैव ग्रहणान्न-
मःश्रुतेश्च तदंतत्वेनाप्युपपत्तेर्नमोंतशब्दैः कार्यमिति ॥ तद्यथा दर्भासने उपविश्याचम्य परमेश्वरप्रीत्यर्थं
ब्रह्मयज्ञंकरिष्येइतिसंकल्प्योपस्थं कृत्वा दर्भगर्भब्रह्मांजलिंकृत्वानमोनमोनमइतिजपेत् ॥ यद्वातत्रऋग्वेदा-
यनमः एवं यजुर्वेदायनमः सामवेदाय० अथर्ववेदाय० शिक्षायै० कल्पाय० व्याकरणाय० निरुक्ताय० ज्योतिषे०
छंदोविचित्यै० अध्यात्मविद्यायै० इतिहासपुराणेभ्यो० तर्कविद्यायै० पूर्वमीमांसायै० उत्तरमीमांसायैनम



इतिजपित्वा देवताभ्यः पितृभ्यश्चमहायोगिभ्यएवच ॥ नमःस्वाहायैस्वधायैनित्यमेवनमोनमइतितिर्जपित्वा ॥
विद्याध्वरतपोयोनिरयोनिर्विष्णुरीडितः ॥ वाग्यज्ञेनार्चितोदेवः प्रीयतांमेजनार्दनइत्युक्त्वाउदकंस्पृशेत् ॥
अथतर्पणम् ॥ तच्चब्रह्मणेनमइतिनमोंतैर्मंत्रैः कार्यंतस्यनमःशब्दोक्तेरितिकेचित् ॥ अन्येतुतृप्यतामित्योंकारपू-
र्वमितिकातीयसूत्रस्यतृप्यतांशब्दस्यत्यागेमानाभावात्तदंतैरित्याहुः ॥ आसनेदक्षिणंजान्वाच्यसमदर्भाक्षतैर्हस्त-
द्वयेनदेवतीर्थेनतर्पयेत् ॥ तच्चमदनपारिजातेयोगियाज्ञवल्क्यः कातीयसूत्रानुसारेणोच्यते ॥ यथा ब्रह्मातृप्यतां ॥
विष्णुस्तृप्यतां ॥ रुद्रः । प्रजापतिः । देवाः । छंदांसि । वेदाः । ऋषयः । पुराणाचार्याः । गंधर्वाः ॥
इतराचार्याः । संवत्सरः । सावयवः । देव्यः । अप्सरसः । देवानुगाः । नागाः । सागराः । पर्वताः । सरितः ।
मनुष्याः । यक्षाः । रक्षांसि । पिशाचाः । सुपर्णाः । भूतानि । पशवः । वनस्पतयः । ओषधयः । भूतग्रा-
मश्चतुर्विधस्तृप्यतां ॥ आचार्यचूडामणौ तु ॥ प्रजापत्यंते ॥ देवायक्षास्तथानागागंधर्वाप्सरसोसुराः ॥ क्रूराः
सर्पाः सुपर्णाश्चतरवोजंभकाः खगाः ॥ विद्याधराजलाधारास्तथैवाकाशगामिनः ॥ नीराहाराश्चयेजीवाः पा-
पेधर्मेरताश्चये ॥ तेषामाप्यायनायैतद्दीयतेसलिलंमयेतिमात्स्योक्तेर्नतर्पणमुक्तम् ॥ अथऋषयः ॥ निवीतंकृत्वो-

दगग्रदर्भमध्येनप्रजापतितीर्थेनातिलाक्षतमिश्रौद्वौद्वावंजलीमंत्रावृत्त्यादद्यात् ॥ सनकः । सनंदनः । सनातनः । कपिलः । आसुरः । वोढः । पंचशिखः ॥ अथपितृतर्पणम् ॥ दक्षिणाभिमुखः सव्यंजान्वाच्य ॥ प्राचीनावीती ॥ पितृतीर्थेनद्विगुणदर्भैस्तिलमिश्रांस्त्रींस्त्रीनंजलीन्दद्यात् ॥ वसवस्तृप्यंतां । रुद्राः । आदित्याः । मरुतः । अश्विनौ । कव्यवाडनलस्तृ० । सोमः । यमः । अर्यमा । अग्निष्वात्ताः । सोमपाः । बर्हिषदः । यमः । धर्मराजः । मृत्युः । अंतकः । वैवस्वतः । कालः । सर्वभूतक्षयः । औदुंबरः । दध्नः । नीलः । परमेष्ठी । वृकोदरः । चित्रः । चित्रगुप्तः । जीवत्पितृकोप्येतदंतान्सर्वांस्तर्पयेत् । ततः स्वपितृतर्पणं ॥ पितृभ्योनमइत्यावाह्य ॥ काश्यपगोत्रः अस्मत्पिताऽमुकदासस्तृप्यतां । एवंत्रिः । एवंपितामहः । प्रपितामहः । पितृभ्योनमइतिषट्त्रिर्मधुशब्देनवाअंजलिंप्रसिंचेत् अस्मन्माताकाश्यपगोत्राऽमुकदेवीदातृप्यतां ॥ एवंपितामही । प्रपितामही । सापत्नमाता । एवंपितृभ्योनमः । आवाह्य मातामहः । प्रमातामहः । वृद्धप्रमातामहः ॥ एवंमातामही । प्रमातामही । वृद्धप्रमातामही । एवंस्वभार्या । पुत्रः । कन्या । पितृव्यः । मातुलः । स्वभ्राततत्पत्न्यः । पितृष्वसा । मातृष्वसा । स्वभगिनी । सापत्नीसभर्तृकेतितिसृषु । श्वशुरः । गुरुः । सखा । मित्रभूतः । यद्वा



आब्रह्मस्तंबपर्यंतंदेवर्षिपितृमानवाः । तृप्यंतुपितरः सर्वेमातृमातामहादयः ॥ अतीतकुलकोटीनांसप्तद्वीपनिवासिनां ॥ आब्रह्मभुवनाल्लोकादिदमस्तुतिलोदकमिति ॥ यत्तुमदनपारिजातेहारीतः ॥ वसित्वावसनंशुष्कंस्थलेनिस्तीर्णबर्हिषि ॥ विधिज्ञस्तर्पणंकुर्यान्नतुपात्रेकदाचनेति ॥ तदनुद्धृतोदकस्थलतर्पणपरं ॥ उद्धृतेसएवपात्राद्वाजलमादायस्वयंपात्रांतरेक्षिपेत् ॥ जलपूर्णेऽथवागर्तेनस्थलेनतुबर्हिषि ॥ योगियाज्ञवल्क्यः यद्युद्धृतेनासिंचेततिलान्संमिश्रयेज्जले ॥ अतोन्यथानुसव्येनातिलाग्राह्याविचक्षणैः ॥ एतच्चगृहेपुत्रवतानकार्यं ॥ सप्तम्यां रविवारेचगृहेजन्मदिनेतथा ॥ भृत्यपुत्रकलत्रार्थीनकुर्यात्तिलतर्पणमितिमरीचिस्मृतेः ॥ ततः येकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः ॥तेगृण्हंतुमयादत्तंवस्त्रनिष्पीडनोदकमिति तीरेस्थलेवावस्त्रंपीडयेत् ॥ आचार्यचूडामणौतु ॥ येबांधवाबांधवावायेचजन्मनिबांधवाः ॥ तेतृप्तिमखिलायांतुयेवास्मत्तोभिकांक्षिणः ॥ नमोनमइतिशाटीपीडनमुक्तं ॥ ततः सव्येनविष्णुपुराणोक्तैस्तर्पयेत् ॥ देवासुरास्तथानागायक्षगंधर्वराक्षसाः ॥ पिशाचा गुह्यकाः सिद्धाः कूश्मांडास्तरवःखगाः ॥ जलेचराभूमिलयावाय्वाधाराश्चजंतवः ॥ तृप्तिमेतेनयांत्वाशुमद्दत्तेनांबुनाखिलाः ॥ नरकेषुसमस्तेषुयातनासुचयेस्थिताः ॥ तेषामाप्यायनायैतद्दीयतेसलिलंमया ॥ येबांधवाबांधवा

वायेन्यजन्मनिबांधवाः ॥ तेसर्वेतृप्तिमायांतुमयादत्तैस्तिलोदकैरिति ॥ संक्षेपस्तु ॥ आब्रह्मस्तंबपर्यंतंजगत्तृप्यतु
इत्येकांजलिः ॥ ततोब्रह्मणेनमः विष्णवेनमः रुद्रायनमः सावित्रेनमः मित्रायनमः वरुणायनमइति
जलेसंपूज्यहस्तेनपुनः ब्रह्मणेनमः अग्नयेनमः पृथिव्यैनमः ओषधिभ्योनमः वाचस्पतयेनमः विष्णवेनमः म-
हद्भ्योः॰अद्भ्यः॰ अपांपतये॰ वरुणायनमइति तर्पणंकृत्वामुखंसंमृज्यदेवेभ्योनमइति विसर्जयेत् ॥ इतिकम-
लाकरभट्टकृतेशूद्रधर्मकमलाकरेशूद्रस्यस्नानतर्पणादि ॥ अथदेवपूजा ॥ साचविश्वेश्वरादिजीर्णलिंगार्चादौस्व-
स्थापितपार्थिवलिंगादौवास्पर्शसहिताकार्या ॥ शालग्रामस्फटिकद्विजस्थापितलिंगार्चादौस्पर्शरहितादूरतः
कार्या ॥ यदाप्रतिष्ठितंलिंगंमंत्रविद्भिर्यथाविधि ॥ तदाप्रभृतिशूद्रश्चयोषिद्वापिनसंस्पृशेदितिनारदीयात् ॥ ए-
तच्चप्रागुक्तम् ॥ साचनाम्नाकार्या ॥ एवंस्त्रियाअपि ॥ विष्णोस्तुपूजनंकार्यंपतिबुद्ध्यानचान्यथेतिमदनपारि-
जातेविधवाधर्मेस्कांदोक्तेः ॥ तत्रैवपाद्मे ॥ आदित्यंगणनाथंचदेवींद्रंचयथाक्रमम् ॥ नारायणंविशुद्धाख्यमंतेच
कुलदेवताम् ॥ निगमः ॥ ब्रह्माणंविष्णुमीशंवासूर्यमग्निंगणाधिपम् ॥ दुर्गांसरस्वतींलक्ष्मींगौरींवानित्यमर्चये-
त् ॥ यत्तुमनुः ॥ जपस्तपस्तीर्थसेवा प्रव्रज्या मंत्रसाधनम् ॥ देवताराधनं चैवस्त्रीशूद्रपतनानिषडिति तद्वि-



हितभिन्नपरं ॥ मात्स्ये ॥ सौवर्णीराजतीवापिताम्रीरत्नमयीतथा ॥ शैलीदारुमयीवापिलोहसंघमयितथा ॥
लोहसंघःपंचधातुरसाः ॥ रीतिकाधातुयुक्तावाताम्रकांस्यमयीतथा ॥ शुभदारुमयीवापिदेवतार्चाप्रशस्यते ॥
अंगुष्ठपर्वादारभ्यवितस्तिर्यावदेवतु ॥ गृहेषुप्रतिमाकार्यानाधिकाशस्यतेबुधैः ॥ भागवते ॥ वैदिकस्तांत्रि-
कोमिश्रइतिमेत्रिविधोमखः ॥ शिवार्चनचंद्रिकायांपाद्मे ॥ वैदिकोमिश्रितोवापिविप्रादीनांविधीयते ॥ तांत्रि-
कोविप्रभक्तस्यशूद्रस्यापिप्रकीर्तितः ॥ तत्रोपचाराअनेकविधाराघवभट्टैः पदार्थादर्शउक्ताः ॥ आचारचिंताम-
णौ ॥ सपर्याविविधाः प्रोक्तास्तासामेकांसमाश्रयेत् ॥ गंधादिकानिवेद्यांतापूजापंचोपचारिका ॥ अथदशोप-
चाराः ॥ अर्घ्यपाद्यमाचमनमधुपर्कासनानिच ॥ गंधादिपंचकंचेतिउपचारादशोदिताः ॥ अथषोडशोपचाराः ॥
आसनंस्वागतंचार्घः पाद्यमाचमनंतथा ॥ मधुपर्काचमस्नानवसनाभरणानिच ॥ गंधपुष्पौधूपदीपौनैवेद्यंचंदनं
तथा ॥ अथाष्टादशोपचाराः ॥ आसनावाहनंचार्घ्यंपाद्यमाचमनंतथा ॥ स्नानंवस्त्रोपवीतंचभूषणानिचसर्वशः ॥
गंधपुष्पेतथाधूपंदीपंनैवेद्यमेवच ॥ माल्यानुलेपनेचैवनमस्कारविसर्जने ॥ अथषट्त्रिंशोपचाराः ॥ आसनाभ्यं-
जनेतद्वदुद्वर्त्तनविरूक्षणे ॥ संमार्जनंसर्पिरादिस्नपनावाहनेततः ॥ पाद्यार्घाचमनीयंचस्नानीयमधुपर्ककौ ॥ पुन-

राचमनीयंचवस्त्रयज्ञोपवीतके ॥ अलंकारोगंधपुष्पेधूपदीपौतथैवच ॥ तांबूलानिचनैवेद्यंपुष्पमालास्तथैवच ॥ अनुलेपंचशय्याचचामरंव्यजनंतथा ॥ आदर्शदर्शनंछत्रंनमस्कारोथवर्तनम् ॥ गीतवाद्येचदानानिस्तुतिहोमप्रदक्षिणं ॥ दंतकाष्ठप्रदानंचततोदेवविसर्जनं ॥ उपचाराइमेज्ञेयाः षट्त्रिंशत्सुरपूजने ॥ अन्येचतुःषष्ट्युपचाराः तेचकाम्यपूजायां ॥ एतेविकल्पायथाविभवंबह्वृचपरिशिष्टे एकांविनायकेकुर्याद्द्वेर्के तिस्रश्च शंकरे ॥ चतस्रः केशवे दद्यात्सप्ताश्वत्थेप्रदक्षिणाः ॥ अन्यत्रतु ॥ एकांचंड्यांरवेः सप्त तिस्रोदद्याद्विनायके ॥ चतस्रोविष्णवेदेयाः शिवस्यार्द्धप्रदक्षिणा ॥ वृषंचंडंवृषंचैवसोमसूत्रंपुनर्वृषं ॥ चंडंचसोमसूत्रंचपुनश्चंडंपुनर्वृषं ॥ अपसव्यंयतीनांतुसव्यंतु ब्रह्मचारिणां ॥ सव्यापसव्यंगृहिणामेवंशंभोः प्रदक्षिणा ॥ तथाग्नेये ॥ प्रदक्षिणत्रयंकुर्याच्छिवस्यायतनेबुधः ॥ लैंगे ॥ सव्यंव्रजेत्ततोसव्यंप्रणालंनैवलंघयेत् ॥ तथा उरसा शिरसा चैवमनसावचसातथा ॥ पद्भ्यांकराभ्यांजानुभ्यांप्रणामोऽष्टांगउच्यते ॥अपिचपूजादेवतीर्थेनकार्या ॥ मार्जनार्चनबलिकर्मभोजनानिदेवतीर्थेनेतिहारीतोक्तेः ॥ ब्राह्मे ॥ ब्रह्मांगलग्नंविप्रेभ्योवैष्णवंचप्रदीयते ॥ रुद्रांगलग्नमग्नौतुदहेत्सर्वंचतत्क्षणात् ॥ शिष्टेभ्यस्त्वथदेवेभ्योदत्तंदीनेषुनिक्षिपेत् ॥ मदनपारिजातेगारुडे ॥ धात्रीफलेनयत्पुण्यंजयंत्याः समुपोषणे ॥ खगेंद्रसलभेन्मर्त्यस्तुलसीपूजनेनतत् ॥ नृसिंहपुराणे ॥ शतपुष्पंबिल्वपत्रंचंपकं तगरंतथा ॥ करवीरंतथाश्वेतंपालाशंकुशपुष्पकं ॥ वनमालाप्यशोकंचसेवंतीकुब्जमालती ॥ त्रिसंध्यं चतथाश्वेतंकुंदंचशतपत्रकं ॥ मल्लिकाचैवजातीचसर्वपुष्पाद्विशिष्यते ॥ पत्राण्यपितत्रैव ॥ अपामार्गभृंगराजं शमीपत्रंचखादिरम् ॥ दूर्वाचकुशपत्रंचदमनागुरुकेतथा ॥ ततः श्रेष्ठंबिल्वपत्रंततश्चतुलसीवरा ॥ पल्लवान्यपिचैषांस्युःशस्तान्यर्चाविधौहरेः ॥ अगस्त्यवृक्षसंभूतैः कुसुमैरसितैःसितैः ॥ येर्चयिष्यंतिदेवेशंतैःप्राप्तंवैष्णवंपदं ॥ तुलसीमालयाविष्णुः केतक्यावापिपूजितः ॥ समा[1]सहस्रंसुप्रीतोभवेद्वैमधुसूदनः ॥ शिवेवर्ज्यानितत्रैव ॥ जपाबंधूकसिंदूरंतथात्रैसंधिकेह्युभे ॥ नदंतीकेतकीयूथीमालतीकुटजानिवा ॥ घुसृणंचकुमारंचप्रमादेनापिनार्पयेत्॥ बर्बरीसर्जपत्राणितथाचकुमुदद्वयम् ॥ विष्णुरहस्ये ॥ जलंपर्यु[2]षितंत्याज्यंपत्राणिकुसुमानिच ॥ तुलस्यगस्त्यबिल्वानिगांगंवारिनदुष्यति ॥ विशेषस्तुमत्कृतेनिर्णयसिंधौपूर्तकमलाकरेचज्ञेयः ॥ अथ तीर्थमाहिमा ॥ स्कांदे ॥ शालग्रामोद्भवोदेवोयत्रद्वारवतीभवः ॥ उभयोःस्नानतोयेनब्रह्महत्यानिवर्तते ॥ हेमाद्रौलक्षणकांडेस्कांदे ॥ कुं-

१ संवत्सरसहस्रमित्यर्थः । २ पूर्वस्मिन्दिने आनीतम् ।

कुमंचंदनंपत्रंनैवेद्यंकुसुमंजलं ॥ शालग्रामशिलालग्नंतीर्थकोटिशताधिकम् ॥ पाद्मे ॥ सस्नातःसर्वतीर्थेषुसर्वय-
ज्ञेषुदीक्षितः ॥ शालग्रामशिलातोयेयोभिषेकंसमाचरेत् ॥ गंगागोदावरीरेवानद्योमुक्तिप्रदास्तुयाः ॥ तात्रसंती-
हसर्वत्रशालग्रामशिलाजले ॥ गौतमांबरीषसंवादे ॥ येषांधौतानिगात्राणिहरेःपादोदकेनवै ॥ अंबरीषगृहेतेषां
दासोहंवशगःसदा ॥ हरेःस्नानावशेषंतुजलंयस्योदरेस्थितम् ॥ अंबरीषप्रणम्योच्चैःपादपांसुःप्रगृह्यताम् ॥ गर्ज-
तितावदन्यानितीर्थानिभुवनत्रये ॥ यावन्नप्राप्यतेतीर्थंशालग्रामाभिषेचनं ॥ जन्मप्रभृतिपापानांप्रायश्चित्तंयदी-
च्छसि ॥ शालग्रामशिलावारिपापहारिनिषेव्यतां ॥ नृसिंहपुराणे ॥ गंगाप्रयागगयपुष्करनैमिषाणि पुण्यानि
यानिकुरुजांगलयामुनानि ॥ कालेनतीर्थसलिलानिहरंतिपापंपादोदकंभगवतस्तु पुनातिसद्यः ॥ ब्रह्मचारी
सव्रतीचआश्रमीचसदाशुचिः ॥ विष्णुपादोदकंयस्यमुखेशिरसिविग्रहे ॥ स्मृत्यर्थसारे ॥ देहः शुध्यतिचा-
प्यात्मापीत्वापादोदकंहरेः ॥ नित्येनैमित्तिकेकाम्येपीत्वाभुक्त्वानदुष्यति ॥ व्रतादौ विष्णुपादोदकंपीत्वानंतरं
भुक्त्वानदुष्यति ॥ कृत्वेतिपाठेनित्येकाम्येचएकादशीव्रतादौनैमित्तिकेसांवत्सरिकश्राद्धादौपादोदकंपीत्वात-
त्कर्मकृत्वानदुष्यतीत्यर्थः ॥ ननु जलस्यापिनरश्रेष्ठप्राशनाद्भेषजाद्दते ॥ नित्यक्रियानिवर्तेतकाम्यनैमित्तिकैः सहे-



तिकालिकापुराणात् ॥ नतुतत्कर्मकृत्वानदुष्यतीत्यर्थः ॥ अभुक्तेभुक्तवत्तोयमितिनिषेधाच्चकथंकर्मार्हतेतिचेन्न ॥
सामान्यस्यविशेषेणबाधात् ॥ रागप्राप्तनिषेधाच्च ॥ विष्ण्वर्चायांशिलार्चागुरुषु[1]नरमतिर्वैष्णवेजातिबुद्धिर्विष्णोर्वै
वैष्णवानांकलि[2]मलमथनेपादतीर्थेंबुबुद्धिः ॥ विष्णोस्तन्नाम्निमंत्रेसकलकलुषहे[3]शब्दसामान्यबुद्धिर्विष्णौसर्वेश्व-
रेशेतदितरसमधीर्यस्यवानारकीसइतिदोषदर्शनाच्च ॥ तच्चपूजांतेपेयं ॥ तदुत्तरांगत्वात् ॥ येतुउपवासदिनेप्रा-
क्कर्मणश्चनापिबंतितेभ्रांताः ॥ अशितानशिताह्यापोजलेनैवहिपारयेदितिदर्शनाच्चेति विष्णुवाजपेयिनः ॥ गरुड-
पुराणे ॥ जलंनयेषांतुलसीविमिश्रंपादोदकंचक्रशिलासमुद्भवं ॥ नित्यंत्रिसंध्यंप्लवतेनगात्रंखगेंद्रतेधर्मबहिष्कृता
नराः ॥ आह्निकप्रदीपे ॥ सूतकेमृतकेवापि आशौचंनैवविद्यते ॥ तेषांपादोदकंमूर्ध्निप्राशनंयेचकुर्वते ॥ अंत-
कालेपियस्येहदीयतेपादयोर्जलं ॥ सोपिसद्गतिमाप्नोतिपापाचारोबहिष्कृतः ॥ भुक्त्वापीत्वाविशुद्धःस्यात्पी-
त्वापादोदकंहरेः ॥ स्कांदेशिववचनं ॥ दृष्टिपूतंतुयत्तोयंविष्णुनाप्रभविष्णुना ॥ तद्विपापहरंपुत्रकिंपुनः पादयो-
र्जलं ॥ विष्णुरहस्ये ॥ विष्णुपादोदकंपीत्वापश्चादशुचिशंकया ॥ यश्चाचामतिसंमोहाद्ब्रह्महत्यांसविंदति ॥

१ पुरुषबुद्धिः । २ कलिदोषनाशके । ३ पापहे ।

गारुडे ॥ पादोदकंपिबेन्नित्यंनैवेद्यंभक्षयेद्धरेः ॥ शेषंचमस्तकेधार्यमितिवेदानुशासनं ॥ शालग्रामशिलातोयमपी-
त्वायस्तुमस्तके ॥ प्रक्षेपणंप्रकुर्वीतब्रह्महासनिगद्यते ॥ शालग्रामशिलातोयं पिबेद्दामकरेणतु ॥ अज्ञानाद्दै-
दवंप्रोक्तंज्ञानादब्ददंसमाचरेत् ॥ विष्णोःपादोदकंपीत्वाकोटिजन्माघनाशनं ॥ तदेवाष्टगुणंपापंभूमौबिंदुनिपात-
नात् ॥ भक्तिचंद्रोदये ॥ आयसेचतथाकांस्येकाष्ठेवालाबुकेतथा ॥ उद्धृत्यपादसलिलंमद्यतुल्यंविनिर्दिशेत् ॥
श्रीविष्णोः पादसलिलंकरेकृत्वामुखेक्षिपेत् ॥ अदत्त्वापिव्रतेतोयंरौरवेनरकेवसेत् ॥ अदत्वाविष्वक्सेनादि-
भ्यइतिशेषः ॥ ग्रहणमंत्रोहलायुधे ॥ अकालमृत्युहरणंसर्वव्याधिनिवारणं ॥ विष्णोः पादोदकंपीत्वाशिरसा
धारयाम्यहमितिहेमाद्रौमाधवीयेचस्कांदे ॥ एकादश्यामुपोष्याथयोश्नातिद्वादशीदिने ॥ नैवेद्यंतुलसीमिश्रंहत्या-
कोटिविनाशनं ॥ यत्तुश्रीदत्तीये ॥ आचारादर्शे ॥ सात्वनामिषुल्यहुत्वाभक्षयंतीतिचेन्निवेदनसमानकर्तृकभक्ष-
णोक्तेः॥ परेणनिवेदितेस्वत्वाभावाद्देवद्रव्यंगुरुद्रव्यंयत्नेनपरिवर्जयेदितिनिषेधात् स्पृष्ट्वादेवलकंचैवसवासाजल-
माविशेदितिनिषेधात्स्पृष्ट्वायूपंदिवाकीर्तिंदेवद्रव्योपजीविनं ॥ सवासाजलमाविश्यघृतंप्राश्यविशुध्यतीति



१ चांडालम् ।

स्मृतेश्च ॥ विशेषोमत्कृतेआचारदीपेज्ञेयः ॥ अथशूद्रस्यवैश्वदेवः ॥ शंखः ॥ पंचयज्ञविधानंतुगृहीनित्यंनहा-
पयेत् ॥ यमः ॥ ब्रह्मयज्ञोदेवयज्ञः पितृयज्ञस्तथैवच ॥ भूतयज्ञोनृयज्ञश्चपंचयज्ञाः प्रकीर्तिताः ॥ सचलौकि-
काग्नौकार्यः ॥ वैवाहिकेग्नाविल्याचार्यइतिविज्ञानेश्वरः ॥ अतएवतंत्ररत्नेस्थपतीष्टिर्लौकिकेग्नावुक्ता ॥ येतु
लौकिकाग्नावपिशूद्रस्यनभवतीत्याहुस्तेमूर्खाएव ॥ विज्ञानेश्वरापरार्कमेधातिथयोप्येवमाहुः ॥ तत्रापिपाकाग्नौ
कार्यः ॥ गृह्याग्नौतुपचेदन्नंलौकिकेवापिनित्यशः ॥ यस्मिन्नग्नौपचेदन्नंतस्मिन्होमोविधीयते ॥ इतिमनूक्तेः ॥
असंभवेशातातपः ॥ लौकिकेवैदिकेवापिहुतोत्सृष्टेजलेक्षितौ ॥ वैश्वदेवस्तुकर्तव्यः पंचसूनापनुत्तये ॥ सचप-
केनापिकार्यः ॥ स्थपतीष्टिवत् अन्यथातत्राप्यामंस्यादितिकेचित् ॥ पक्वमुच्छिष्टमुच्यतइत्युक्तेः ॥ स्वकर्तृक
आमेनैवेतिस्मार्तगौडाः ॥ तत्रवैश्वदेवेमन्वाद्यैर्नानाप्रकाराउक्ताः ॥ तेषुमनूक्तोनिरग्निद्विजपरः ॥ तस्यकाती-
यसूत्रोक्तेर्गृह्याग्निंविनानधिकारादितिस्मृतिकौमुदीकारः ॥ तन्न निरग्नेः शाकलमंत्रैर्होमाद्युक्तेः ॥ तदाहमदन-
पारिजातेचवसिष्ठः ॥ अनग्निकस्तुयोविप्रः सोन्नंव्याहृतिभिः स्वयं ॥ हुत्वाशाकलमंत्रैस्तुशेषाद्भूतबलिंहरेत् ॥
शाकलमंत्राः देवकृतस्यैनसोइतिषट्शूद्रस्यापिप्रागुक्तरीत्याकातीयकर्मोक्तेरेतद्देवतानाम्नाहोमः ॥ नतुमनूक्तः ॥

शूद्रस्यश्रुतिश्रवणाभावेनतत्कर्मण्यधिकारात् ॥ तेनयेषांकठादीनांशाखायांवैश्वदेवोनोक्तस्तेषांमनूक्तः ॥ यद्वा
शूद्राणांपुराणश्रवणाधिकारात्तदुक्तोवैश्वदेवस्तैःकार्यः ॥ तथामार्कंडेयपुराणे ॥ ततः संपूजयेद्वह्निंदद्याच्चैवा-
हुतीः क्रमात् ॥ प्रथमांब्रह्मणेदद्यात्प्रजानांपतयेततः ॥ तृतीयांचैवगृह्याभ्यः कश्यपायतथापरां ॥ ततोनुमतये
दद्याद्दद्यात्गृहबलिंततः ॥ पर्जन्यांभोधरित्रीणांदद्यात्तुमणिकेत्रयं ॥ वायवेप्रतिदिग्भ्यश्चदिग्भ्यः प्राच्यादितः
क्रमात् ॥ ब्रह्मणेचांतरिक्षायसूर्यायचयथाक्रमं ॥ विश्वेभ्यश्चैवदेवेभ्योविश्वभूतेभ्यएवच ॥ उषसेभूतपतयेद-
द्याच्चोत्तरतस्ततः ॥ स्वधायैनमइत्युक्त्वापितृभ्यश्चापिदाक्षिणे ॥ कृत्वाऽपसव्यंवायव्यांयक्ष्मैतत्तेवनेजनं ॥ तत-
स्तोयमुपादायतेषांनाम्नाक्षिपेद्बुधइति ॥ विष्णुपुराणेप्येवंहोममुक्त्वाबलौविशेषउक्तः ॥ तच्छेषंमणिकेपृथ्वीप-
र्जन्यादभ्यः क्षिपेत्ततः ॥ द्वारेधातुर्विधातुश्चमध्ये च ब्रह्मणः क्षिपेत् ॥ इंद्राय धर्मराजाय वरुणाय तथेंदव ॥
प्राच्यादिषुबुधोदद्याद्धुतशेषात्मकंबलिं ॥ प्रागुत्तरेचदिग्भागेधन्वंतरिबलिंविदुः ॥ वायव्येवायवेदिक्षुसमस्तासुत-
तोदिशां ॥ ब्रह्मणेचांतरिक्षायभानवेचाक्षिपेद्बलिं ॥ विश्वेदेवान्विश्वभूतांस्ततोविश्वपतीन्पितॄन् ॥ यक्ष्माणंच
समुद्दिश्यबलिंदद्यान्नरेश्वर ॥ कातीयसूत्रेपीदमेवबलिहरणंकिंचिन्न्यूनं ॥ तेनशूद्रेपीदमेव तत्रस्वाहाकारेनम-



स्कारोमंत्रः शूद्रेविधीयते ॥ इतिभारतोक्तेहोमेस्वाहाशब्दोबलौनमः शब्द इतिस्मृतिकौमुदी ॥ तन्न नमस्का-
रेणमंत्रेणेत्येतद्विरोधात् ॥ तच्चबलिंदानंगृहदेशेषुकार्यं ॥ अग्नेः पश्चाद्वा ॥ अथप्रयोगः ॥ दर्भहस्त आचम्य
तूष्णींप्राणानायम्य वादेशकालौस्मृत्वापंचसूनापनुत्तयेपरमेश्वरप्रीत्यर्थंवैश्वदेवंकरिष्येइतिसंकल्प्यस्थंडिलंसंमृ-
ज्योपलिप्योल्लिख्यांगुष्ठानामिकाभ्यांमृदमुद्धृत्याभ्युक्ष्यलौकिकाग्निंसंस्थाप्याग्नयेनमः ॥ मुखंयःसर्वदेवानांहव्य-
भुक्कव्यभुक्तथा ॥ पितृणांचनमस्तस्मैविष्णवेपावकात्मने ॥ इतिसंपूज्य ॥ पर्युक्ष्याग्नौचरुपाकंकृत्वागृहान्ने-
नतंडुलैराज्यप्लुतैः फलैर्वाकुर्यात् ॥ तद्द्रव्यमग्नौनिधायोद्वास्याभ्युक्ष्यहस्तेनघृतप्लुतंजुहुयात् ॥ आहुतिर्द्वाद
शपर्वपूरिकाआमलकमात्रावा ॥ यथा अग्नयेनमः इदमग्नयेनममेतित्यागः ॥ एवमग्रेपि ॥ वायवे० सूर्याय०
प्रजापतये० अग्नये० ब्रह्मणे० इतिषट् इतिशाकलहोमः ॥ अथपौराणःब्रह्मणे० प्रजापतये० गृह्याभ्यो० कश्यपाय०
अनुमतये० विश्वेभ्योदेवेभ्यो० अग्नयेस्विष्टकृतइति ॥ ततःपर्युक्ष्य ॥ विभूतिंधृत्वानमस्कुर्यात् ॥ विज्ञानेश्वर-
मतेदेवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच ॥ नमःस्वाहायैस्वधायैनित्यमेवनमोनम इत्येतेनसकृद्धोमः ॥ नम
इत्येवमंत्रेणहोमइत्येके ॥ मदनपारिजातेपरिशिष्टे ॥ शाकंवायदिवापत्रंमूलंवायदिवाफलं ॥ संकल्पयेद्यदा-

हारेतेनाग्नौजुहुयादपि ॥ व्यासः ॥ जुहुयात्सर्पिषाभ्यक्तंतैलक्षाराविवर्जितम् ॥ दध्यक्तंपयसाभ्यक्तंतदभावेंभसापिवा ॥ चतुर्विंशतिमते ॥ अलाभेयेनकेनापिफलशाकोदकादिभिः ॥ पयोदधिघृतैः कुर्याद्वैश्वदेवंस्रुवेणतु ॥ हस्तेनामादिभिःकुर्यादद्भिरंजलिनाजले ॥ इतिदेवयज्ञः ॥ अथभूतयज्ञः ॥ मध्येपर्जन्यायनमः ॥ अद्भ्यो० पृथिव्यै० द्वारशाखयोर्धात्रेनमः इदंधात्रे० एवमग्रेपि ॥ विधात्रेनमः प्रतिदिशं वायवे० प्रतिदिशंदिग्भ्यो०इंद्राय० धर्मराजाय० वरुणाय० इंदवे० ईशान्यां धन्वंतरये० वायव्यां वायवे० ब्रह्मणे० अंतरिक्षाय० सूर्याय० उत्तरे विश्वेभ्योदेवेभ्योनमः विश्वेभ्योभूतेभ्यो० भूतानांपतयेनमः ततः दक्षिणे प्राचीनावीती ॥ पितृभ्यःस्वधानमः ॥ इदंपितृभ्यः जलस्पर्शः अयं कातीयः पक्षः पौराणश्च स्वधाशब्दोनेत्येके ॥ पात्रंप्रक्षाल्य ॥ वायव्ये यक्ष्मैतत्तेइतिनिनयेत् इदं यक्ष्मणे अथवा देवताभ्यः पितृभ्यश्चेत्यनेनैवभूमौबलिः ॥ तेनैवपितृयज्ञइत्येके आचार्यचूडामणौतु ॐभूः स्वाहेतिविप्रेणोक्तेनमोनमइतिस्वयंजुहुयात् ॥ एवंव्यस्ताः समस्ताश्चततोदेवकृतस्यैनसोदेवयजनमसिस्वाहेतिविप्रेणोक्तेनमइतिस्वयंहोमः ॥ तन्न नमस्कारेणवैदिकबाधात् ॥ अग्नयइदं एवं षट् ततोयमायस्विष्टकृतेच भूमौविश्वेभ्योदेवेभ्यः सर्वेभ्योभूतेभ्योनमः नमः पितृभ्योनमइतिदक्षिणे ॥ ऐ-



शानेयक्ष्मैतत्ते पौराणैरेकं चांडालादिभ्योवायसेभ्यश्च दक्षिणेधर्मराजाचित्रगुप्ताभ्यांदद्यादित्युक्तं ॥ ततः शेषमादायगृहांगणेप्रोक्ष्य १८ धन्वंतरये० १० प्राच्यैदिशे० ५ विधात्रे० ६ वायवे० १३ उदीच्यै० २२ सूर्याय० १४ इंद्राय० ९ वायवे० २७ विश्वपतये० २१ अंतरिक्षाय० ४ धात्रे० १७ इंदवे० २६ भूपतये० २० ब्रह्मणे० ११ दक्षिणा० १८ वायवे० २५ विश्वेभ्योभू० ३ पृथिव्यै० ७ वायवे० २४ १९यक्ष्मणे० २३ विश्वेभ्यो० २ अद्भ्यः १५ धर्मराजा० १२ प्रतीच्यै० १ पर्जन्याय० २ स्वधापितृ० ८ वायवे० नृभ्यः १५ वरुणाय० ॥ द्वौश्वानौश्यामशबलौवैवस्वतकुलोद्भवौ ॥ ताभ्यांपिंडंप्रदास्यामिस्यातामेतावहिंसकौ ॥ श्वभ्यांनमइतिदत्वापुनरादाय ॥ ऐंद्रवारुणवायव्याः सौम्यावैनैर्ऋतास्तथा ॥ वायसाःप्रतिगृह्णंतुभूमौपिंडंमयार्पितामितिकाकबलिंदत्वा ॥ इदंवायसेभ्यः इत्युक्त्वापुनरादायविष्णुपुराणोक्तैर्मंत्रैर्बलीन्दद्यात् ॥ तथा देवामनुष्याः पशवोवयांसिसिद्धाः सयक्षोरगदैत्यसंघाः॥ प्रेताःपिशाचाः स्तरवः समस्तायेचान्नमिच्छंतिमयाप्रदत्तं ॥इदंदेवादिभ्यः ॥ पिपीलिकाःकीटपतंगकायाबुभुक्षिताः कर्मनिबंधबद्धाः ॥ प्रयांतुतेतृप्तिमिदंमयान्नंतेभ्योविसृष्टंसुखिनोभवंतु ॥ इदंपिपीलिकादिभ्यः ॥ येषांनमातानपितानबंधुर्नैवान्नसिद्धिर्नतथान्नमस्ति ॥ तत्तृप्तयेन्नंभुविद-

त्तमेतत्तेयांतुतृप्तिंमुदिताभवंतु ॥ इदमनाथबंधुभ्यः ॥ भूतानिसर्वाणितथान्नमेतदहंचविष्णुर्नयतोन्यदस्ति ॥
तस्मादहंभूतनिकायभूतमन्नंप्रयच्छामिभवायतेषां ॥ इदंभूतेभ्यः ॥ चतुर्दशोभूतगणोयएषतत्रस्थितायेऽखिलभू-
तसंघाः ॥ तृप्त्यर्थमन्नंहिमयाविसृष्टंतेषामिदंतेमुदिताभवंतु ॥ इदंभूतगणादिभ्यः ॥ इत्युच्चार्यनरोदद्यादन्नंश्र-
द्धासमन्वितः ॥ भुविभूतोपकारायगृहीसर्वाश्रयोयतः ॥ श्वचांडालविहंगानांभुविदद्यात्ततोनरः ॥ येचान्येप-
तिताःकेचिदपुत्राभुविमानवाः ॥ ततोगोदोहनमात्रंवैकालंतिष्ठेद्गृहांगणइति ॥ ततःकृम्यादिपतितपापरोगि-
श्वपचादिभ्योदद्यादितिनागदेवाह्निकेहरिहरभाष्येच ॥ तदेतद्वैश्वदेवंद्विजानांयद्यपिसायंप्रातरुक्तंतथापिशूद्रा-
णांदिवैवनतुसायं ॥ पंचयज्ञमात्रोक्तेःवैश्वदेवविध्यभावात् ॥ तदाहमदनपारिजातेजमदग्निः ॥ वैश्वदेवंत-
थारात्रौकुर्याद्बलिहृतिंतथा ॥ महतःपंचयज्ञांस्तुदिवैवेत्याहधर्मवित् ॥ तेनरात्रौवैश्वदेवःपंचयज्ञभिन्नत्वान्नशू-
द्रस्येतिसंक्षेपः ॥ अथनित्यश्राद्धं ॥ तत्पृथक्कार्यंनवा ॥ श्राद्धंवापितृयज्ञःस्यात्पित्र्योबलिरथापिवेतिछंदोग-
परिशिष्टात् ॥ एकमप्याशयेद्विप्रंषण्णमप्यन्वहंगृही ॥ प्रचेताः ॥ नामंत्रणंनहोमश्चनावाहनविसर्जने ॥ न-
पिंडदानंनसुरान्नित्येकुर्याद्द्विजोत्तमः ॥ व्यासः ॥ नावाहनंस्वधाकारः पिंडाग्नौकरणादिकं ॥ ब्रह्मचर्यादिनि-





यमोविश्वेदेवास्तवथैवच ॥ तत्तुषट्पुरुषंज्ञेयंदक्षिणापिंडवर्जितम् ॥ दक्षिणायांविकल्पः ॥ किंचिद्दत्वाविसर्ज-
येदितिप्रचेतसोक्तेः ॥ अथप्रयोगः ॥ आचम्यदेशकालौस्मृत्वानित्यश्राद्धंकरिष्यइत्युक्त्वाऽस्मत्पितृपितामह-
प्रपितामहानांकाश्यपगोत्राणाममुकदासानां एवंमातामहप्रमातामहवृद्धप्रमातामहानांसपत्नीकानांस्थानेक्षणः
कर्तव्यः इतिक्षणंदत्वा ॥ पित्रादयोमातामहाश्चइदंवः पाद्यमितिपाद्यंदत्वाचम्योदङ्मुखंकुशासनेउपविश्यपितॄ-
णांमातामहानांचेदमासनं ॥ पित्रेक्षणः क्रियतां ॥ प्राप्नोतुभवान्प्रप्नवानि ॥ इत्युक्ते ॥ पितरोमातामहाश्च
एषवोगंधःइमानिपुष्पाणि धूपोदीपआच्छादनंचेतिदत्वापूर्णतांवाचयित्वाद्विगुणमामान्नमुपकल्प्यप्रोक्ष्यपात्रमाल-
भ्यतिलान्विकीर्य ॥ अन्नेंगुष्ठं दत्वा पितरः इदं वः आमान्नंद्विगुणंसमंत्रासोपस्करंगगेयंभूःगदाधरोविप्रः ब्रह्मरू-
पमिदंपितृभ्यः काश्यपगोत्रेभ्योमुकदासेभ्यो वसुरुद्रादित्यस्वरूपेभ्यस्तथामातामहादिभ्यश्चेदमामंस्वधासंपद्य-
तांनमःदत्तमक्षय्यमस्तु ॥ ब्रह्मार्पणमस्तु ॥ मधुमधुमधु ॥ इत्युक्त्वा सुप्रोक्षितमस्तु शिवाआपःसंतुसौमनस्य॰
अक्षतं॰दीर्घमायुः॰श्रेयःपितरः स्वस्तीतिब्रूतपितॄणांयद्दत्तंतदक्षय्यमस्तु दक्षिणांदद्यान्नवा एतावत्यशक्तौपित्र्य-
बलिनैवनित्यश्राद्धसिद्धिःइतिनित्यश्राद्धं अथमनुष्ययज्ञः ॥ हारीतः ॥ सर्वाअस्यदेवतागृहानागच्छंतियस्यै-

वंब्राह्मणोविद्वान्गृहमभ्येतितमभ्युपतिष्ठतः प्राणदेवताअपशमांति ॥ बृहस्पतिः ॥ प्रीयतेस्वागतेनाग्निरासने-
नशतक्रतुः ॥ पितरःपादशौचेनभोजनेनप्रजापतिः ॥ याज्ञवल्क्यः ॥ अध्वनीनोतिथिर्ज्ञेयःश्रोत्रियोवेदपारगः ॥
मान्यावेतौगृहस्थस्यब्रह्मलोकमभीप्सतः ॥ अतिथिंश्रोत्रियंतृप्तमासीमांतमनुव्रजेत् ॥ यमः ॥ नपृच्छेद्गोत्रच-
रणंदेशंनामकुलंश्रुतं ॥ अध्वनोभ्यागतंविप्रंभोजनार्थमुपस्थितं ॥ विष्णुपुराणे ॥ दिनेतिथौतुविमुखेगतेयत्पा-
तकंनृणां ॥ तदेवाष्टगुणंपुंसांसूर्येचविमुखेगते ॥ सूर्यास्तेइत्यर्थः ॥ ततोऽतिथिंप्रतीक्ष्यपादौप्रक्षाल्यसंपूज्यामा-
न्नंनिवेद्यकस्मैचिद्विप्रायवासनकादिमनुष्येभ्यइदंनममेत्युक्त्वादद्यात् इदंनित्यश्राद्धात्प्रागितिहरिहरः ॥ विष्णु-
पुराणे ॥ इष्टोवायदिवाद्वेष्योमूर्खः पंडितएववा ॥ संप्राप्तोवैश्वदेवांतेसोतिथिःस्वर्गसंक्रमः ॥ ततोगोग्रासः ॥ म-
दनपारिजातेऋष्यश्रृंगः ॥ गवांग्रासंचकुर्वीतनित्यमेवसमाहितः ॥ गवांकंडूयनंस्पर्शंग्रासमाह्निकमेवच ॥
मंत्रस्तु ॥ सौरभेय्यः सर्वहिताः पवित्राः पापनाशनाः ॥ प्रतिगृह्णंत्विमंग्रासंगावस्त्रैलोक्यमातरः ॥ सुरभेत्वं
जगन्मातर्देविविष्णुपदेस्थिता ॥ ग्रासंगृहाणमद्दत्तंगोमातस्त्रातुमर्हसीति ॥ श्रीदत्तीयेभविष्ये ॥ तृणोदकेनसं-
युक्तंप्रदद्याच्चगवाह्निकं ॥ कपिलाशतदानस्यफलंविद्यान्नसंशयः ॥ गवाह्निकमहोरात्रपर्याप्तंगोभक्ष्यं ॥ मंत्र-



स्तु ॥ पंचभूतेशिवेपुण्येपवित्रेसूर्यसंभवे ॥ प्रतीच्छेमंमयादत्तंसौरभेयिनमोस्तुते ॥ अथभोजनम् ॥ बालवृ-
द्धगर्भिण्यातुरसखिबांधवादीन्संभोज्यपाणिपादंप्रक्षाल्यद्विराचम्यशुचौदेशेरहसि चतुरस्रंत्रिकोणंचवर्तुलंचा-
र्द्धचंद्रकम् ॥ कर्तव्यमानुपूर्व्येणब्राह्मणादिषुमंडलमितिव्यासोक्तमर्धचंद्रंशूद्रस्याभ्युक्षणंमतामितिशंखोक्तमभ्यु-
क्षणंवाकृत्वा पंचाशत्पलिकंकांस्यंद्याधिकंभोजनायवै ॥ गृहस्थैस्तुसदाकार्यमभावेहेमरूप्ययोरितिहेमाद्रा
वत्रिप्रोक्तेकांस्यादिपात्रेपरिविष्टमन्नंप्राङ्मुखोपविष्टोमौनीघृताक्तंप्रोक्ष्य धर्मराजायनमः चित्रायनमः चित्रगु-
प्तायनमः प्रेतेभ्योनमइतिबलीन्दक्षिणतोदत्वाजलंदत्वाजलंप्राश्यदेवतीर्थेनसांगुष्ठेनतूष्णींनमइत्येववापंचग्रासा-
न्प्राश्ययथासुखंभुंजीयात् आदित्यपुराणे ॥ नोच्छिष्टोग्राहयेदाज्यंजग्ध्वाशिष्टंनसंत्यजेत् ॥ पुलस्त्यः ॥ भोजनं
तुननिःशेषंकुर्यात्प्राज्ञः कथंचन ॥ अन्यत्रदधिक्षीराज्यक्षौद्रसक्तुभ्यएवच ॥ वृद्धमनुः ॥ नैकहस्तेनचजलं
शूद्रेणावर्जितंपिबेदित्यादिद्विजवच्छूद्रेज्ञेयं ॥ देवलः भुक्तोच्छिष्टंसमादायसर्वस्मात्किंचिदाचमन् ॥ उच्छि-
ष्टभागधेयेभ्यःसोदकंनिर्वपेद्भुवि ॥ भोजनांतेपुनर्जलंप्राश्यशेषंसिंचेत् ॥ मंत्रस्तु ॥ रौरवेपूयनिलयेपद्मार्बुदनि-
वासिनाम् ॥ अर्थिनामुदकंदत्तमक्षय्यमुपतिष्ठतु ॥ ततोमुखपाणिपादंप्रक्षाल्यद्विराचम्यजानुनीस्पृष्ट्वापुनराचम्य

अगास्तिरग्निर्वडवानलश्च भुक्तंमयान्नंजरयत्वशेषं ॥ सुखंममैतत्परिणामसंभवंयच्छत्वरोगोममचास्तुदेहः ॥ अ-
गस्त्यंकुंभकर्णंचशनिंचवडवानलं ॥ आहारपरिपाकार्थंस्मरामिचवृकोदरमित्युदरंसंस्पृश्यतांबूलंप्राश्यपुराणश्र-
वणादिनाहःशेषं नयेत् ॥ ततोरात्रौरविपर्वसंक्रमव्यतीपातवैधृतिश्राद्धतत्पूर्वदिनभिन्नरात्रौद्वितीयवारं भु-
क्त्वायामोत्तरं आगस्त्यायनमः ॥ माधवायनमः । मुचुकुंदायनमः कपिलायनमः आस्तिकायनमः इतिनत्वा
प्राच्यांदक्षिणतोवाशिरः कृत्वास्वपेत् ॥ तत्रस्त्रियाऋतावाद्यदिनचतुष्कैकादशत्रयोदशवर्जंषोडशदिनमध्येच-
तुर्थीषष्ठ्यष्टमीचतुर्दशीपर्वद्वयश्राद्धतत्पूर्वदिनभिन्नायांरात्रौशनिरविभौमवर्जं भरणीकृतिकार्द्रामघापूर्वाविशाखा-
ज्येष्ठामूलपूर्वाषाढापूर्वाभाद्रपदात्रिकजन्मसंक्रमपातवैधृतिवर्जंसमरात्रौसंगंकृत्वामूत्रात्त्रिगुणंशौचंस्नानंचकुर्या-
त् ॥ एतच्चप्रागुक्तं अनृतौस्नानवर्जंकृत्वास्वपेत् ॥ इदमाह्निकंप्रत्यहंकुर्यात् ॥ ॥ इति श्रीजगद्गुरुनाराय-
णभट्टसूनुरामकृष्णभट्टात्मजकमलाकरभट्टकृतेशूद्रधर्मकमलाकरेशूद्राह्निकम् ॥ ॥ अथ शूद्रस्यपार्वणश्रा-
द्धप्रयोगः ॥ सचोपदेष्टृब्राह्मणवशादनियतशाखयाकार्यइतिमदनपालः तन्न अनियतस्यधर्मत्वायोगात् ॥
तेनशूद्रावाजसनेयिनइतिगौडग्रंथेदक्षोक्तेर्हरिहरभाष्यादिसंवादाच्छिष्टाचाराच्चमाध्यंदिनशाखयोच्यते ॥ क-



र्तापूर्वेद्युर्निरामिषंसकृद्भुक्त्वाप्रदोषेपरेद्युः प्रातर्वाद्विजगृहं गत्वा मंडलेतमुपवेश्यसव्येनदक्षिणं जान्वाच्य शूद्रः
प्रणतिपूर्वकमितिवचनात् प्रणम्यदेशकालौस्मृत्वाश्वःकरिष्यमाणपार्वणश्राद्धेपित्रादित्रयमातामहादित्रयविश्वे-
देवार्थेत्वामहंनिमंत्रये ॥ यद्वाक्षणंदत्वाभवद्भिः प्रसादः कार्यइतिफलंतांबूलंवादत्वैकंद्वौवाविप्रौनिमं-
त्र्य ॥ तथा निमंत्रितोस्मीतिवातेनोक्ते अक्रोधनैः शौचपरैः सततंब्रह्मचारिभिः ॥ भवितव्यंभव-
द्भिश्चमयाचश्राद्धकर्मणि ॥ पूर्वेदिनेतु ॥ सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ॥ भवद्भिर्भवितव्यं
नःश्वोभूतेश्राद्धकर्मणीतिजपेच्छृणुयाद्वा ॥ततस्तथैवापसव्येनवामंजान्वाच्यश्वःकरिष्यमाणश्राद्धेपितृस्थानेत्वा-
महंनिमंत्रये ॥ निमंत्रितोस्मि ॥ एवंपितामहस्थानेप्रपितामहस्थानेच ॥ एवंमातामहादिस्थानेत्रयइतिषट्
वैश्वदेविकेचत्वारइतिदश तत्रवैश्वदेवपक्षेष्टौ ॥ एकोदैवेतंत्रेणपित्रादावेकोमातामहादौचैकइतित्रयोवा यद्वा
षण्णामेकःदैवेचैकइतिद्वौ तदामान्नंषोढाविभज्य यद्यपिदर्शेमातृमध्यंनवदैवत्यंमातामह्यंतंद्वादशदैवत्यंवाश्राद्ध-
मुक्तमस्तितथापिदेशाचाराद्व्यवस्था ॥ षट्दैवतमेवतुबहुसंमतं ॥ सर्वथाविप्रालाभेदर्भबटुंनिधायापिश्राद्धंप्रेष-
प्रत्युक्तिपूर्वंकृत्वातदामान्नंविप्रायदद्यादग्नौवाक्षिपेत् ॥ सर्वत्रामंत्रितोस्मीतिप्रत्युक्तिरक्रोधनैरितिच ॥ ततः परे-

द्युः प्रातःस्थानोपलेपनंकृत्वासचैलंस्नातः श्राद्धसामग्रीसंपाद्यदिनस्यषण्मुहूर्तानंतरंद्विजानाहूय ॥ तेषामनि-
षिद्धदिनेश्मश्रुकर्मकारयित्वास्नानीयजलतैलामलकोद्वर्तनानिप्रेषयित्वामध्यान्हेस्नातागतान्प्रांजलिस्तिष्ठंस्ता-
न्स्वागतंपृष्ट्वासुस्वागतमितितैरुक्तेद्विराचम्य ॥ देशकालौस्मृत्वास्मत्पितृपितामहप्रपितामहानांकाश्यपगोत्रा-
णांअमुकदासानांवसुरुद्रादित्यस्वरूपाणांपार्वणश्राद्धंसदैवंसपिंडंपार्वणविधिनामान्नेनहाविषासद्यःकरिष्ये॥इति-
संकल्प्यगोमूत्रगोमयाभ्यांद्वारेप्रादेशमात्रमुत्तरदक्षिणयोश्चतुरस्रंवृत्तंचमंडलंकृत्वातत्रकुशान्दैवेयवान्पित्र्ये ति-
लान्क्षिपेदितिमदनपालः ॥ तत्वंतुशूद्रस्याभ्युक्षणंमतमितिवचनादभ्युक्षणंकृत्वोत्तरेउदङ्मुखःसव्येनपुरूरवार्द्र-
वसंज्ञकाविश्वेदेवाःस्वागतमितिपृष्ट्वासुस्वागतमितितेनोक्ते गंधपुष्पैःसव्यंशूद्रायेतिवचनादादौसव्यंततोदक्षिण-
मितिपादौसंपूज्य ॥ पूरूरवार्द्रवसंज्ञकाविश्वेदेवाइदंवः पाद्यमर्घ्यंचनमइतिपादयोर्जलंदत्वा एवंदैवद्वितीयेवि-
प्रेदत्वापित्र्यविप्रेकृतापसव्योस्मत्पितः काश्यपगोत्रामुकदासवसुरूपेदंतेपाद्यमर्घ्यंचनमः एवंपितामहेप्रपिता-
महेचरुद्ररूपादित्यरूपेतिज्ञेयं ॥ एवंमातामहादित्रयेच ततोद्विराचांतस्तानाचमय्यदैवेद्वौप्राङ्मुखौदेवेभ्योन-
मःइदमासनमास्यतामितिवामेनासनंस्पृष्ट्वा दक्षिणेनविप्रानुपवेश्यैवंपित्र्येऽपसव्येनोदङ्मुखान् ॥ ततःप्राच्यां

मातामहानां श्राद्धारंभेऽवसानेचपादशौचेतथार्चने ॥ विकिरेपिंडदानेचद्विराचमनमिष्यते ॥ ततः सव्येनकर्मपात्रं
प्रपूर्यगंधपुष्पकुशान्क्षिप्त्वातज्जलेन अपवित्रः पवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरः
शुचिः ॥ पुंडरीकाक्षायनमइति श्राद्धीयद्रव्यंप्रोक्ष्य तिलारक्षंत्वसुरान्दर्भारक्षंतुराक्षसान् ॥ पंक्तिंवैश्रोत्रियोरक्षे-
दतिथिः सर्वरक्षकः इतितिलान्विकीर्यप्रतिद्विजंदीपान्दद्यात् आमान्नादीनांपवित्रतास्तु ॥ केचित्तु ॥ सप्त
व्याधादशार्णेषुमृगाः कालंजरेगिरौ ॥ चक्रवाकाः शरद्वीपेहंसाः सरसिमानसे ॥ तेऽपिजाताः कुरुक्षेत्रेब्रा-
ह्मणावेदपारगाः ॥ प्रस्थितादीर्घमध्वानंयूयंकिमवसीदथ ॥ अमूर्तानांचमूर्तानांपितृणांदीप्ततेजसां ॥ नमस्यामि
सदातेषांध्यायिनांयोगचक्षुषां ॥ श्राद्धभूमौगयांध्यात्वाध्यात्वादेवंजनार्दनं ॥ वस्वादींश्चपितॄन्ध्यात्वाततः श्रा-
द्धंप्रवर्त्तते ॥ इतिजपंति ॥ ततोनीवींबध्वाऽपसव्येनच देवताभ्यः पितृभ्यश्चमहायोगिभ्यएवच ॥ नमःस्वाहा-
यैस्वधायैनित्यमेवनमोनमइतित्रिर्जप्त्वादेशकालौस्मृत्वाकाश्यपगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुक
दासानांतथाकाश्यपगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकदासानांसदैवमुपक्रान्तंपार्वणश्रा-
द्धमहंकरिष्ये ॥ कुरुष्वेतितैरुक्तेदक्षिणंजान्वाच्य ॥ पित्रादित्रयमातामहादित्रयसंबन्धिनः पुरूरवार्द्रवसंज्ञका

विश्वेदेवाइदमासनंवोनमइत्यृजुप्रागग्रकुशपत्रद्वयमासनेदद्यादितिढौंढुपद्धतौ षष्ठीतुयुक्ता दैवेक्षणः क्रियतामिति
कुशंदत्वातथेतितेनोक्ते ॥ प्राप्नोतुभवानित्याह ॥ प्राप्नवानीतिविप्रः ॥ एवंद्वितीयदैवे ॥ ततोपसव्येनवामंजा-
न्वाच्यकाश्यपगोत्रास्मत्पितरमुकदासवसुरूपेदमासनंतेस्वधानमइति वा सतिलद्विर्भुग्नकुशान्दत्वापित्र्येक्षणः
क्रियतामित्यादिप्राग्वत् ॥ एवंपितामहादौमातामहादौच ॥ सव्येनविश्वान्देवानावाहयिष्येइतिपृष्ट्वावाहयेत्य-
नुज्ञातः देवद्विजकरमंगुष्ठेगृहीत्वा आगच्छंतुमहाभागाविश्वेदेवामहाबलाः ॥ येचात्रविहिताः श्राद्धेसावधा-
नाभवंतुते ॥ इतिश्रुत्वापुरूरवार्द्रवसंज्ञकाविश्वेदेवा आगच्छतेत्युक्त्वा पादादिमूर्द्धांतंतिलान्विकिरेदितिकर्कः॥
यवैरन्ववकीर्येतिस्मृतेर्यवानित्यन्ये ॥ ततोहस्तोदकम् ॥ एवं प्रतिपदार्थं ॥ ततोपसव्येन काश्यपगोत्रानस्म-
त्पित्रादीनमुकदासान् एवंमातामहादींश्च आवाहयेइतिपृष्टे आवाहयेत्यनुज्ञातो मूर्धादिपादांतं तिलान्विकी-
र्यास्मत्पितरमुकदासकाश्यपगोत्रवसुरूपागच्छ एवंपितामहरुद्ररूपप्रपितामहादित्यरूप ॥ एवंमातामहेषु ॥
ततोदैवाग्रेसव्येनैकपात्रेद्वेकुशपत्रेकृत्वादेवतीर्थेनदेवेभ्योनमइतियवान्गंधपुष्पेचक्षिपेत् ॥ ततोपसव्येनपित्र्येष-
ड्राजतताम्रखड्गपलाशपात्रादिमृन्मयपात्रेष्वेकद्रव्येषुवाद्वेद्वेदक्षिणाग्रेपवित्रेकृत्वाद्भ्योनमइतिजलं ॥ तिलेभ्यो

नमइतितिलान् ॥ गंधपुष्पाणिचक्षिपेत्ततोर्घ्यंपात्राणिसंपन्नानीत्युक्त्वा सुसंपन्नानीत्युक्ते सव्येनदेवकरेपवित्रेद-
त्वा दक्षिणहस्तस्थेनपात्रेणपित्रादित्रयमातामहादित्रयसंबंधिपुरूरवार्द्रवसंज्ञकाविश्वेदेवाएषवोर्घोनमः इदंवो-
र्घ्यंनमइतिवादत्वाद्भ्योनमइति स्रवदभिमंत्र्यैवंद्वितीयेदत्वापात्रेपवित्रादिकृत्वा देवेभ्यःस्थानमसीत्युत्तरतोन्यु-
ब्जंकुर्यात् ॥ केचिदेतद्दैवेनेच्छंति न्युब्जतानेतिढौंढुः ॥ ततोपसव्येनपित्र्येकरेदक्षिणाग्रंपवित्रंदत्वा काश्यपगो-
त्रास्मत्पितरमुकदासएषतेर्घः स्वधानमः इतिपितृतीर्थेनदत्वाद्भ्योनमइतिसंस्रवाननुमंत्र्य तत्रपवित्रादिधृत्वैवं
पितामहप्रपितामहाभ्यांमातामहादिभ्यश्चदद्यात् ॥ ततः प्रथमेपात्रेसंस्रवानेकीकृत्यापितृवामेकर्तुर्दक्षिणेपितृभ्यः
स्थानमसीतिन्युब्जंकृत्वादक्षिणांतंनचालयेत् ॥ ततः सव्येनजलंदत्वा विश्वेदेवाएषगंधोवोनमः इमानिपुष्पाणि
वोनमः एवंधूपदीपाच्छादनयज्ञोपवीतालंकारतांबूलानिदत्वाजलंदत्वापसव्येनकाश्यपगोत्रास्मत्पितरमुकदा-
स एषतेगंधोनमः एवंपुष्पधूपदीपाच्छादनालंकारान्दत्वैवंपितामहप्रपितामहाभ्यांदद्यात् ॥ एवंमातामहा-
दिभ्यः ॥ ततोर्चनपूर्णतांवाचयित्वाद्विजाग्रेभुवंसंमृज्यपलाशादिपत्रावलीर्न्यस्यगौरमृद्भस्मादिनामंडलंकृत्वा
श्राद्धीयादामान्नादग्रंगृहीत्वाग्नौकरिष्यइतिपंक्तिमूर्धन्यंपृष्ट्वाकुरुष्वेत्युक्ते सव्येनाद्यद्विजकरेपर्युक्ष्य दर्भानास्तीर्या-

वदानधर्मेणाहिरादायाऽग्नयेकव्यवाहनायनमः इतिहुत्वेदमग्नयेकव्यवाहनायेतित्यक्त्वापुनरादायसोमायपितृ-
मतेनमःइदंसोमायपितृमते अपसव्यपक्षेसोमाहुतिःपूर्वाअग्न्याहुतिरुत्तरा ॥ इतिहुत्वाहुतशेषंपिंडार्थमवशि-
ष्यपितामहादिमातामहादिपात्रेषुतूष्णींदद्यात् ॥ ततोदैवेन्यदामंदत्त्वापात्राण्यभिघार्यदैवपूर्वमामंचतुर्गुणंद्विगुणं
समंवादत्वा प्रोक्ष्यदैवेदक्षिणजान्वाच्योपवीती दक्षिणोत्तानसव्यनीचाभ्यांपात्रमालभ्यत्विष्णवेनमइतित्विष्णो।
हव्यंरक्षस्वेतिवाद्विजांगुष्ठंनिवेश्यैवंपित्र्ये ऽ पसव्येनपात्रमालभ्यांगुष्ठेदत्वा तिलान्विकीर्योदकंस्पृष्ट्वाएवंप्रतिपात्रं
कृत्वावामेनदैवपात्रंधृत्वादक्षिणेकुशयवजलान्यादायपित्रादित्रयमातामहादित्रयश्राद्धंसबंधिपुरूरवार्द्रवसंज्ञका
विश्वेदेवाः इदंवः आमान्नंसपरिकरंगयेयंभूः गदाधरोभोक्ताअहंब्रह्मग्रहीताब्रह्मब्रह्मरूपमामंमनः कल्पितसुव-
र्णपात्रस्थमक्षय्यवटच्छायास्थंपुरूरवार्द्रवसंज्ञकेभ्योविश्वेभ्यःअक्षय्यतृप्त्यर्थंसंप्रददेस्वाहा नमम इदमामंसो-
पस्करममृतरूपेणसंपद्यतांहव्यंनमः काश्यांविश्वेश्वरपादेदत्तमक्षय्यमस्तु गयागदाधरः प्रीतोभवतु
ततोऽपसव्येन द्विगुणभुग्नकुशतिलजलान्यादाय वामेनपात्रं धृत्वावामंजान्वाच्यकाश्यपगोत्रोस्मत्पितरमुकदा-
सैतत्ते आमान्नंसपरिकरंगयेयंभूरित्यादिरजतपात्रस्थमक्षय्यवटच्छायास्थं काश्यपगोत्रायास्मत्पित्रेऽमुकदा-

सायवसुरूपायेदमामंसोपस्करमक्षय्यतृप्त्यर्थंसंप्रददेस्वधानमः अमृतरूपेणस्वधासंपद्यतांकव्यंनमःकाश्यामि-
त्यादिप्राग्वत्एवंपितामहप्रपितामहयोर्मातामहादिभ्यश्चदद्यात् असंस्कृतप्रमीतेभ्यएषपिंडइतिविकिरंदत्वाआ-
ममादायअग्निदग्धेभ्योनग्निदग्धेभ्यश्चएषउच्छिष्टपिंडोनमम इतिसोदकमामंपिंडंदत्वातिलोदकंदत्वामधुमध्विति
त्रिर्जपेत् ॥ अथपिंडदानं ॥ तच्चगृहपाकेनपायसेनसक्तुभिर्मूलेनफलेनवाकार्यंपिंडार्थवेदिंकृत्वावामंजान्वाच्य
अपसव्येनदर्भमूलेनदक्षिणाग्रांरेखांकृत्वैवंद्वितीयांकृत्वापः स्पृष्ट्वारेखाग्रे उल्मुकेनिधायोदपात्रेणाद्यरेखामूल-
मध्याग्रेषुकाश्यपगोत्रास्मत्पितरमुकदासवसुरूपावनेनिक्ष्वैवंपितामहप्रपितामहयोर्दत्वा द्वितीयरेखायां मातामहादिभ्यस्त्रिभ्योदत्वासकृदाछिन्नकुशान्दक्षिणाग्रान्रेखाद्वयेनिक्षिप्यमध्वाज्यसर्वव्यंजनोपेतमन्नमग्नौकरणशेषस -
हितंपात्रेकृत्वाषट्पिंडान्कृत्वा पितृतीर्थेनकाश्यपगोत्रास्मत्पितरमुकदासएतत्तेऽन्नंस्वधा एषतेपिंडोनमऽइतिवाद-
त्वाइदंपित्रे ततः कुशानंतर्धायकाश्यपगोत्रास्मत्पितामहेत्यादिनात्रिभ्योदत्वालेपभुग्भ्योदर्भमूलेषुकरंमार्जयित्वैवं
मातामहादित्रिभ्योदत्वाकरौप्रक्षाल्याचम्योदगावृत्यामंत्रंप्राणानायम्यवसंतायनमः ग्रीष्मायनमइत्येवंषट्ऋतून्नम-
स्कृत्यापसव्येनपितृभ्योनमइत्यंजलिंबध्वैवंमातामहेभ्योनमइतिततोवामावर्तेनोदङ्मुखः श्वासंनियम्यपुनरावृत्य

पितृभ्योनमः मातामहेभ्योनम इतिनत्वा काश्यपगोत्रास्मत्पितरमुकदासप्रत्यवनेनिक्ष्वेतिप्राग्वत्षट्सुपिंडेषुप्र-
त्यवनेजनंदत्वा नीवींविसृज्यपितृभ्योनमः मातामहेभ्योनमः इतिनत्वापितृभ्योनमः मातामहेभ्योनमइतिप्रतिपिं-
डंसूत्राणिदत्वापितृभ्योनमइत्यवनेजनशेषंपिंडमात्रंक्षालनजलंवा पितृपिंडेषुप्रदक्षिणंनिषिच्यैवंमातामहेभ्योनमः
ततोदेवताभ्यः पितृभ्यश्चेतित्रिर्जप्त्वापिंडेषुपित्रादिनाम्नागंधपुष्पधूपदीपनैवेद्यफलतांबूलदक्षिणाःनिवेद्यकर्मपात्र-
जलंसुप्रोक्षितमस्तु ॥ शिवाआपःसंतुइतिदैवेदत्वासौमनस्यमस्तुपुष्पाणि अक्षतंचारिष्टंचास्तुअक्षताः अपसव्येन
पितृभ्योमातामहेभ्यश्चदत्वास्वमूर्ध्निदीर्घमायुरस्तु पुष्टि॰वृद्धि॰यच्छ्रेयस्तदस्तु यत्पापंतत्प्रतिहतमस्तु भूमौद्वि-
पदचतुष्पदेभ्यः शांतिरस्तु अस्त्वितिद्विजाः ततः पुरूरवार्द्रवसंज्ञकेभ्योविश्वेभ्योदेवेभ्यः यद्दत्तमामादितदक्ष-
य्यमस्तु एवंकाश्यपगोत्रस्यास्मत्पितुरमुकदासस्ययद्दत्तमित्यादि एवंपितामहादौमातामहादौचअस्त्वक्षय्यमिति
विप्राः अघोराःपितरः संतु॰एवंमातामहाःगोत्रंनोवर्धतां दातारोनोभिवर्धंतां संततिश्च॰श्रद्धाचनोमाव्यगमत्
बहुदेयंचनोस्तु अन्नंचनोबहुभवेत् अतिथींश्चलभेमहियाचितारश्चनः संतुमाचयाचिष्मकंचन तथास्त्वितिवि-
प्राः ततः पित्रादिभ्योमातामहादिभ्यश्चस्वधोच्यतां ॥ अस्तुस्वधेतिविप्राः कुशान्पिंडेषुन्यस्यार्घ्यपात्रमुत्तानं



कृत्वादैवेसुवर्णंपितॄणांरजतंदक्षिणांदत्वा नानानामगोत्रेभ्यः आमान्नंहिरण्यंचदत्वापिंडानुद्वास्याघ्रायविश्वेदे-
वाःप्रीयंतामितिब्रूहीत्युक्त्वा वाचयित्वा एवंपित्र्येकृत्वा सव्येनस्वस्तिभवंतोब्रुवंतु स्वस्तीत्युक्तेसंपूर्णतांवाच-
यित्वा कुशैरुत्तिष्ठतपितरः विश्वेदेवैःसहेत्युद्वास्यमंडलेप्रदक्षिणीकृत्य नमस्कृत्यविसर्जयेत् ॥ ॥ इतिश्री-
कमलाकरभट्टकृतौशूद्राणांपार्वणश्राद्धप्रयोगः ॥ रामकृष्णतनूजेनकमलाकरशर्मणा शूद्रधर्मान्निरूप्याथतदा-
शौचंनिरूप्यते ॥ तत्रयद्यप्यस्मत्कृतेनिर्णयसिंधौसर्वमुक्तमस्तितथापितत्रत्यमेवसंक्षेपेणशूद्राणांकिंचिदुच्यते ॥
मूलंतुतत्रैवज्ञेयं तत्रादौगर्भाशौचं आचतुर्थमासांतंस्रावःपंचमषष्ठयोःपातःसप्तममासादिःपूर्णप्रसवः ॥ मनुः
रात्रिभिर्मासतुल्याभिर्गर्भस्रावेविशुध्यति ॥ इदंचतुर्थपरंत्रिमासमध्येरजस्वलात्वेनैवात्रिरात्रंसिद्धं ॥ मरीचिः गर्भ-
स्रुत्यायथामासमचिरेतूत्तमेत्रयः ॥ राजन्येतुचतूरात्रंवैश्येपंचाहमेवच ॥ अष्टाहेनतुशूद्रस्यशुद्धिरेषाप्रकीर्तिता ॥
अचिरेत्रिमासमध्येउत्तमेब्राह्मणे अस्यार्थःस्मृतिकौमुद्यां गर्भस्रावेत्रिमासोर्ध्वंचतुर्थमाससमंदिनचतुष्टयंसर्ववं-
र्णसमंमासत्रयमध्येत्रिदिनमपिसर्ववर्णसमं ॥ ब्राह्मणेत्रिमासमध्येत्रिदिनांतेत्रयोदिवसाआधिकाः ॥ त्रयइत्यस्या-
वृत्तिरेकशेषश्च तेनत्रिमासमध्येत्रिरात्रांतेविप्रेत्रिदिनंक्षत्रियादौचतुरहादि ॥ केचित्तु ॥ प्रथमादिमासेष्वपिएक-

रात्राद्यनंतरंवर्णेषुत्रिरात्राद्याहुः अन्यथापंचमादिमासेषुवैश्यादेःपंचाहादि त्रिमासमध्येचचतुरहादीत्यनौचि-
तीस्यात् स्रात्रेसपिंडानांस्नानंपितुर्मातुर्यथामासं ॥ पित्रादीनांत्रिदिनंइदंनिर्गुणानांसगुणानांत्वेकाहमितिमदन-
पालः इदंसर्ववर्णसमंतुल्येवयसिसर्वेषामतिक्रांतेतथैवचेतिव्याघ्रोक्तेः ॥ अथप्रसवाशौचं ॥ संवर्तःजातेपुत्रेपि-
तुः स्नानंसचैलंतुविधियते ॥ पुत्रपदात्कन्यापियत्तुहारलतायांसूतकेतुमुखंदृष्ट्वाजातस्यजनकस्ततः ॥ कृत्वासचै-
लंस्नानंतुशुद्धोभवतितत्क्षणादितिब्राह्मोक्तेर्मुखदर्शनोत्तरंपुनः स्नानपरत्वंपरास्तं मूलैक्येनदशिङ्गानपरत्वात् गौडा-
स्तुसापत्नमातुः प्राक्स्नानादस्पृश्यत्वंअन्याश्चमातरस्तद्वत्तद्गृहंनव्रजंतिचेदितिब्राह्मादित्याहुः अंगिराः नाशौचं
सूतकेपुंसः संसर्गंचेन्नगच्छति ॥ रजस्तत्राशुचिज्ञेयंतच्चपुंसिनविद्यते ॥ संसर्गोमैथुनं शयनासनादिकमितिमाधवः
स्पर्शइतिगौडाः तन्न संसर्गेसूतिकायास्तुस्नानमेवविधीयते ॥ इत्यंगिरसोक्तेः एवकाराद्बालस्पर्शेनदोषः व्यासः
प्रथमेदिवसेषष्ठेदशमेचैवसर्वदा ॥ त्रिष्वेतेषुनकुर्वीतसूतकंपुत्रजन्मनि ॥ अत्रविशेषः षष्ठीपूजादिचप्रागुक्तं प्रयो-
गपारिजातेतुपुंप्रसवेदशाहः कन्याप्रसवेतुत्र्यहः स्त्रीजन्मनिसपिंडश्चसोदकश्चत्र्यहाच्छुचिः स्त्रीषुत्रिपुरुषंज्ञे-
यंसपिंडत्वंद्विजोत्तमाः इत्यग्निस्मृतेरित्याह गौडास्तुवाग्दानोत्तरंकानीनकन्याविषयंचैतदित्याहुः॥अथमृताशौचं

हारीतः जातेमृतेमृतेजातेवासपिंडानांदशाहंनालच्छेदोर्ध्वंमृतइत्यर्थः नाड्यांछिन्नायामाशौचमितितेनैवोक्तेः ना-
लछेदात्पूर्वमातुर्नास्पृश्यतेतिशुद्धितत्त्वेनालच्छेदात्पूर्वं मृतौतुबृहन्मनुः जीवन्जातोयदिततोमृतः सूतकएवतु ॥
सूतकंसकलंमातुः पित्रादीनांत्रिरात्रकं शावनिमित्तंस्नानमात्रं प्राङ्नामकरणात्सद्यः शौचमितिशंखोक्तेः नाम-
करणंचौलकालोपलक्षणमितिमेधातिथिहरदत्तगौडादयः नेतिमाधवादयः नामोत्तरंदंतोत्पत्तेः प्राक्दाहेसति
सपिंडानामहः दाहाभावेस्नानमात्रं आदंतजन्मनः सद्यइतियाज्ञवल्क्योक्तेः दंतोर्ध्वंत्रिवर्षात्प्राक्चूडाभावेऽहः
अत्राग्निदानेत्र्यहइतिमाधवः त्रिवर्षात्प्रागूर्ध्ववासचूडेत्र्यहएव अब्दोर्ध्वंत्वचूडोपित्र्यहः इदंसपिंडानांपित्रोस्तु
दशाहोर्ध्वंमृतेबालेसर्वत्रत्रिरात्रं बालानामजातदंतानांत्रिरात्रेणशुद्धिरितिकश्यपोक्तेः बैजिकादभिसंबंधा-
दनुरुंध्यादघंत्र्यहमितिमनूक्तेश्चेतिमिताक्षरामाधवादयः शुचितत्त्वादयोगौडास्त्वेतत्त्रिरात्रंशूद्रपरं द्विजानांत्व-
जातदंतेएकाहः जातदंतेत्रिरात्रं अजातदंतमरणेपित्रोरेकाहमिष्यते ॥ दंतजातेत्रिरात्रंस्याद्यदिस्यातांतुनि-
र्गुणौइतिकौर्मात् अनूढानांतुकन्यानांतथावैशूद्रजन्मनामितित्र्यहानुवृत्तौशंखोक्तेः त्रिरात्रंतुभवेच्छूद्रेषण्मासेपि
शिशौमृतेइतिमत्स्यसूक्ताच्चजातदंतेशूद्रेतुपंचाहः यथाहांगिराः शूद्रेत्रिवर्षमूनेतुमृतेशुद्धिस्तुपंचाभिः ॥ अतऊ-

र्ध्वंमृतेशूद्रेद्वादशाहोविधीयते ॥ षड्वर्षांतमतीतोयः शूद्रः साम्रियतेयदि ॥ मासिकंतुभवेच्छौचमित्यांगिरसभाषि-
तम् ॥ तेनानूढभार्येनिर्गुणेशूद्रेमृतेत्रिवर्षोर्ध्वंद्वादशाहः षडब्दोर्ध्वंमासः यत्तुअनूढभार्यः शूद्रस्त्वितिशंखोक्तंषो-
डशाब्दोर्ध्वंमासाशौचं तत्सगुणसच्छूद्रपरम् कृतोद्वाहेतुसर्वत्रषडब्दात्प्रागपिमासः यत्तुतुल्यंवयसिसर्वेषामि-
तिव्याघ्रोक्तेः शूद्रेन्यूनाशौचंतद्दाक्षिणात्यपरं ॥ अन्यदेशेप्रागुक्तकौर्मोक्ताव्यवस्थेत्याहुः तुल्यंवयसिसर्वेषामि-
त्येतद्विरोधाच्छिष्टविगानाच्चांगिरसादीनिनादर्तव्यानीतिविज्ञानेश्वरमदनपारिजातादयः षोडशाब्दमध्येविवाहा-
भावेत्रिरात्रंतत्सत्वेमासः ऊर्ध्वंविवाहाभावेपिमासइत्यपरार्कमदनपालादयः कन्यानांतुचौलात्प्राक्मृतौस्नानं
अचूडायांतुकन्यायांसद्यः शौचंविधीयतइत्यापस्तंबोक्तेः इदंत्रिपुरुषमध्ये चौलोत्तरंवाग्दानात्प्रागेकाहः अविशे-
षेणवर्णानामर्वाक्संस्कारकर्मणः ॥ त्रिरात्रात्तुभवेच्छुद्धिः कन्यास्वन्हाविधीयतइत्यंगिरसात्रिरात्रविषयेअहोविधा-
नात् अहस्त्वदत्तकन्यास्वित्युक्तेश्चेदंत्रिपुरुषमध्ये अप्रत्तानांस्त्रीणांत्रिपुरुषीविज्ञायतेइतिवासिष्ठोक्तेः गौडास्त्विदं
वाग्दानोत्तरं अप्रत्तानांतथास्त्रीणांसापिंड्यंसाप्तपौरुषमितिकौर्मोक्तेरित्याहुःवाग्दानोत्तरंप्राक्विवाहान्मृतौभर्तृकु-
लेपितृकुलेचसप्तपुरुषावधित्रिरात्रं अवारिपूर्वंप्रत्तातुयानैवप्रतिपादिता ॥ असंस्कृतातुसाज्ञेयात्रिरात्रमुभयोःस्मृ-



तमितिमरीच्युक्तेः॥ अथासंस्कृतेशूद्रेमृतेविशेषः माधवीयेब्राह्मे स्त्रीणांतुपतितोगर्भःसद्योजातोमृतोपिवा अजात-
दंतोमासैर्वामृतःषड्भिर्गतैर्बहिः॥ वस्त्राद्यैर्भूषितंकृत्वानिक्षिपेत्तंतुकाष्ठवत् ॥ खनित्वाशनकैर्भूमौसद्यःशौचंविधीय-
ते॥विष्णुःअनिवृत्तेदशाहेतुपंचत्वंयदिगच्छति॥सद्यएवविशुद्धिःस्यान्नप्रेतान्नोदकक्रिया॥यमःऊनद्विवार्षिकंप्रेतं
घृताक्तंनिखनेद्बहिः॥तेननाम्नःपूर्वंखननमेव तदूर्ध्वंवर्षत्रयात्पूर्वंचौलाभावेऽग्न्युदकयोर्विकल्पः जातदंतस्यवाकु-
र्युर्नाग्निवापिकृते सतीतिमनूक्तेः चूडोत्तरंत्वग्निदानंत्रिवर्षात्प्रागूर्ध्वंवानियतमेव तूष्णीमेवोदकंकुर्यात्तूष्णीं संस्का-
रमेवच ॥ सर्वेषांकृतचूडानामन्यत्रापीच्छयाद्वयमितिलौगाक्षिस्मृतेः॥ अन्यत्राकृतचूडेइच्छयेतिविकल्पउक्तः ॥
चूडोत्तरंदशपिंडाअपिकार्याः असंस्कृतानांभूमौपिंडंदद्यात् संस्कृतानांकुशेष्वतिप्रचेतसोक्तेः द्वादशाद्वत्सरादर्वा-
क्पौगंडमरणेसति ॥ सपिंडीकरणंनस्यादेकोद्दिष्टानिकारयेदितिहरदत्तधृतदेवलोक्तेश्च द्वादशादित्यनूढशूद्रपरं ॥
मरीचिः प्रेतपिंडंबहिर्दद्याद्दर्भमंत्रविवर्जितः॥ एतदसंस्कृतपरामितिविज्ञानेश्वरः॥ त्रिरात्रेदशपिंडानाहपारस्करःप्र-
थमेदिवसेदेयास्त्रयःपिंडाः समाहितैः ॥ द्वितीयेचतुरोदद्यादस्थिसंचयनंतथा ॥ त्रींस्तुदद्यात्तृतीयेऽन्हिवस्त्रादिक्षा-
लयेत्ततः॥ अस्थिसंचयनंसंस्कृतेएवनान्यत्र ॥ अत्रदेवयाज्ञिककृतेक्रियानिबंधेविशेषः गारुडे शिशुरादंतजनना-

द्बालः स्याद्यावदाशिखः ॥ कथ्यतेसर्वशास्त्रेषुकुमारोमौंजिबंधनात् ॥ तथा गर्भेनष्टेक्रियानास्तिदुग्धंदेयंशिशौ
मृते॥परंचपायसंक्षीरंदद्याद्बालविपत्तितः ॥ एकादशाह्द्वादशाहेवृषोत्सर्गोविधिंविना ॥ तथा यत्रप्रमीयतेबालस्तत्र
प्रायः प्रदीयते॥ किंचित्समानवयसासत्कृत्यान्नंयथाविधि ॥ भक्ष्यंभोज्यंचदातव्यंतथाचसुखभक्षिका ॥ तद्वस्त्राणि
प्रदेयानिसोपानत्कानितत्समे ॥कुमाराणांचबालानांभोजनंवस्त्रवेष्टनं ॥यच्चोपजीवतेबालस्तत्तद्विप्रायदीयते॥तथा
भूमिनिक्षेपणंबालआवर्षद्वयमाशिखं॥ततःपरंखगश्रेष्ठदेहदाहोयथाविधि॥ अचूडेप्यूर्ध्वंखननाभावार्थमावर्षद्वय-
मिति प्रागपिकृतचूडस्यतन्निवृत्तर्थमाशिखमिति चूडाकर्मणिसंजातेविपत्तिस्तुयदाभवेत् सूतकान्तेप्रकर्तव्यंवृष-
स्योत्सर्जनंतदा॥तत्रदाहः प्रकर्तव्यउदकंतत्रनिश्चितं॥श्राद्धानिषोडशापिस्युः सपिंडीकरणंविना॥इदंपंचवर्षोत्तरं
जन्मतः पंचवर्षाणिभुंक्तेदत्तमसंस्कृतं ॥ पंचवर्षाधिकेबालेविपत्तिर्यदिजायते ॥ वृषोत्सर्गादिकंकर्मकर्तव्यमुदकं
ततः॥अहन्यहनिसंप्राप्तेकुर्याच्छ्राद्धानिषोडश॥ पायसेनगुडेनैवपिंडंदद्याद्यथाक्रमं ॥ उदकुंभप्रदानंचपददानानि
यानिच ॥ दीपदानानियत्किंचित्पंचवर्षाधिकेसदा ॥ कर्तव्यंतुखगश्रेष्ठव्रतावाक्प्रेततृप्तये॥ ऋजुदर्भैस्तिलैः शुक्लैः
प्राचीनावीतिनातथा॥वार्षिकंतुनभवत्येवसपिंडनाभावेपितृत्वाभावात्॥ दिवोदासीये अव्रतेनिधनंप्राप्तेविप्रादौशू-

द्रजातिवत्॥ क्रियाः सर्वाःसमुद्दिष्टाःसपिंडीकरणंविना॥ उदकंपिंडदानंचकृतचूडेविधीयते ॥ अनूढकन्यानांपिंड-
विकल्पः स्त्रीणांचैकेप्रत्तानामितिगौतमोक्तेः ॥ अथशूद्रस्यजात्याशौचं तत्रमनुपराशरगौतमाद्यैः शूद्रोमासेनशुध्य-
तीतिमासमात्रमुक्तं याज्ञवल्क्यस्तुत्रिंशाद्दिनानिशूद्रस्यतदर्धंन्यायवर्तिनइतिपंचयज्ञादिपरसच्छूद्राणांपंचदशा-
हमाहअंगिरास्तु सर्वेषामेववर्णानांसूतकेमृतकेतथा दशाहाच्छुद्धिरेतेषामितिशातातपोब्रवीदित्याह शुद्धित-
त्वेदेवलोपि आशौचंदशरात्रंतुसर्वेषामपरेविदुः ॥ निधनेप्रसवेचैवपश्यंतःकर्मणः फलम् ॥ अत्यंतोत्कृष्टकर्मणोहा-
नौपीडावतोविप्रपरिचर्यापरंशूद्रेदशरात्रमितिहारलताकारः यत्तुदक्षः सद्यःशौचंतथैकाहस्त्र्यहश्चतुरहस्तथा ॥
षट्दशद्वादशाहाश्चपक्षोमासस्तथैवच ॥ मरणांतंतथाचान्यद्दशपक्षास्तुसूतकेइति अत्रमरणानंतरंसूतकादौभिन्नंस-
द्यःशौचादिषडहांतंयायावरादिपरं ॥ अन्यपूर्वायस्यगेहेभार्यास्यात्तस्यानित्यशः ॥ आशौचंसर्वकार्येषुदेहेभवति
सर्वदेतिब्राह्मोक्तेर्व्यवस्थेत्यपरार्कादयः तत्रविवाहोत्तरंसर्वत्रशूद्रेपूर्णाशौचं विवाहाभावेपिनिर्गुणानांषडब्दोर्ध्वंमा-
सइतिगौडाः सगुणानांविवाहाभावेषोडशाब्दोर्ध्वंमासइत्यपरार्कः अत्रापदनापद्विषयागुणवदगुणपरादेशभेदा-
द्व्यवस्था द्विजदासादीनांतुस्वाम्याशौचमेव दासीदासश्चसर्वेवैयस्यवर्णस्ययोभवेत् तद्वर्णस्यभवेच्छौचंदा-

स्यामासस्तुसूतकमित्यांगिरसोक्तेः शातातपः तदाश्रितस्यतद्दत्स्यादिति तंद्दिजमाश्रितइत्यर्थः अन्येषांकुंडगो-
लकादीनांसूतादीनांचप्रतिलोमानांमासमाशौचं शूद्राणांतुसधर्माणः सर्वेपध्वंसजाः स्मृताइतिमनूक्तेः अपध्वं-
सजाव्यभिचारजाः शौचाशौचेप्रकुर्वीरन्शूद्रवद्दर्णसंकराः इतिशुद्धितत्वेब्राह्माच्च म्लेच्छादीनांतुनाशौचं केवलं
मलापकर्षणार्थंमूत्रपुरीषवच्छौचमात्रमितिविज्ञानेश्वरः तत्रसूतकेमातृवर्जमस्पृश्यत्वंनास्ति सूतकेसूतिकावर्जंसं-
स्पर्शोननिषिध्यतेइत्यंगिरसोक्तेः पितुरविस्नानोर्ध्वं माताशुध्येद्दशाहेनस्नानात्तुस्पर्शनंपितुरितिस्मृतेः शौचेतु देवलः
स्वाशौचकालाद्दिज्ञेयंस्पर्शनंतुत्रिभागतः॥ इदमल्पे ॥ पूर्णाशौचेत्वंगिराः दशाहादित्रिभागेनकृतेसंचयने क्रमात्॥
अंगस्पर्शनमिच्छंतिवर्णानांतत्वदर्शिनः इदंकलौनिषिद्धं अस्थिसंचयनादूर्ध्वमंगस्पर्शनमेवचेतिहेमाद्रावादिपुराणे
कलिवर्ज्येषूक्तेः ॥ सूतिकायास्तुदशाहएव सूतिकासर्ववर्णेषुदशरात्रेणशुद्ध्यति ॥ ऋतौचनपृथक्शौचंसर्ववर्णेष्वयं
विधिरितिप्रचेतसोक्तेः ॥ यत्तुब्राह्मे ब्राह्मणीक्षत्रियावैश्याप्रसूतादशभिर्दिनैः ॥ गतैः शूद्राचसंस्पृश्यात्रयोदशभि-
रेवचेतितदसच्छूद्रपरम् ॥ कर्मार्हतांत्वाहपैठीनसिः सूतिकांपुत्रवतींविंशतिरात्रेणकर्माणिकारयेन्मासेनस्त्रीजननीं
एतच्चविंशतिरात्रमाशौचोत्तरंज्ञेयं अन्यथामासाशौचेसपिंडानामाशौचमध्येतस्याः कर्मार्हतेत्यनौचित्याद्दशरात्रप-



र्यंतंविधिवैषम्याच्च आपस्तंबःक्षत्रविट्शूद्रजातीनांयेस्तोमृतकसूतके तेषांतुपैतृकंशौचंविभक्तानांतुमातृकंमनुःद-
शाहंशावमाशौचंसपिंडेषुविधीयतेदशाहपदंस्वाशौचपरंतथाशवस्पृशोविशुध्यंतित्र्यहात्तूदकदायिनः ॥ सोदका-
इत्यर्थः ॥ अग्निपुराणे सपिंडतातुसर्वेषांगोत्रतःसाप्तपौरुषीसमानोदकभावश्चनिवर्त्तेताचतुर्दशात्जन्मनामस्मृ-
तेरेकेतत्परंगोत्रमुच्यते ॥ समानोदकानांतुत्र्यहोगोत्रजानामहःस्मृतं ॥ प्रयोगपारिजातेअग्निस्मृतौस्त्रीजन्मनि-
सपिंडश्चसोदकश्चत्र्यहाच्छुचिः ॥ स्त्रीषुत्रिपुरुषंज्ञेयंसपिंडत्वंद्दिजोत्तमाः ॥ वसिष्ठः अप्रत्तानांतुस्त्रीणांत्रिपुरुषी-
विज्ञायते ॥ इदमाशौचमौरसस्यैव दत्तकाद्येकादशपुत्राणांजननेमरणेवाद्दयोःपित्रोस्त्रिरात्रमेव तदुक्तंस्मृतिकौ-
मुद्यांब्राह्मे औरसोयदिनोपुत्रस्त्वथवापुत्रिकासुतः ॥ विद्यतेतत्रतेषांतुविज्ञेयाः क्षेत्रजादयः ॥ दत्तकश्चस्वयंदत्तः
कृत्रिमःक्रीतएवचेत्युपक्रम्य एकादशपृथग्गोत्रावंशमात्रकरास्तुते ॥ श्राद्धादिदासवत्सर्वेतेषांकुर्वीतिनित्यशः ॥
सूतकेमृतकेवापित्र्यहाशौचस्यभागिनः ॥ शुद्धितत्त्वेप्येवं एवंजनकस्यापि बैजिकादभिसंबंधादनुरुंध्यादघं-
त्र्यहमितिमनूक्तेः एवंजनकपालकपितृमातृमृतौदत्तकानांत्र्यहमेव अयंचत्र्यहोविप्रपरःशूद्राणांत्वत्रद्दादशाहः ॥
यत्तत्रिरात्रंविप्राणामाशौचंसंप्रदृश्यते ॥ तत्रशूद्रेद्दादशाहंषण्णवक्षत्रवैश्ययोरितिऋष्यश्रृंगोक्तेरितिमदनपालः ॥

यत्रवर्णविशेषानुपादानेनत्रिरात्रं यथा सोदकेदत्तकादौच तत्रद्वादशाहः शूद्रेनतुवयोवस्थानिमित्ते तुल्येत्रयसि-
सर्वेषामतिक्रांतेतथैवचेतिव्याघ्रपादोक्तेः ऋष्यशृंगादिवचनानिशिष्टविगानान्नादर्तव्यानीतिविज्ञानेश्वरादयःदेश-
भेदाद्व्यवस्थेतिमदनपालः एवंव्यभिचारिणीनांस्त्रीणांदत्तकादीनांचप्रसवेमरणेचपूर्वापरभर्त्रोः पित्रोश्चत्रिरात्रं
तथाचत्रिरात्रानुवृत्तौविष्णुः अनौरसेषुपुत्रेषुजातेषुचमृतेषुच ॥ परपूर्वासुभार्यासुप्रसूतासुमृतासुच ॥ मरीचिः
सूतकेमृतकेचैवत्रिरात्रंपरपूर्वयोः ॥ एकाहस्तुसपिंडानांत्रिरात्रंयत्रवैपितुः ॥ यत्तुयाज्ञवल्क्यः अनौरसे-
षुपुत्रेषुभार्यास्वन्यगतासुचेत्यहोरात्रमाह तत्सपिंडपरंदेशपरं वा परपत्नीसुतादत्तकादयः ॥ बृहस्पतिःअ-
न्याश्रितेषुदारेषुपरपत्नीसुतेषुच ॥ मृतेष्वाप्लुत्यशुध्येत्तुत्रिरात्रेणद्विजोत्तमाः ॥ माधवीयेहारीतः परपूर्वासुभा-
र्यासुपुत्रेषुचकृतेषुच ॥ भर्तृपित्रोस्त्रिरात्रंस्यादेकाहस्तुसपिंडतः ॥ शूद्रेतुद्वादशरात्रं प्रागुक्तं परपत्नीस्वयंसंगृ-
हीतापरपूर्वा इदंसवर्णासु हीनवर्णासुतु आशौचाभावः आशौचेतुत्रिरात्रंस्यात्समवर्णेषुनिश्चितमितिब्राह्मोक्तेः
पूर्वापरभर्तुरुत्पन्नपुत्रयोस्त्वाहमरीचिः मातुरैक्याद्द्विपितृकौभ्रातरावन्यगोत्रजौ ॥ एकाहंसूतकंतत्रत्रि-
रात्रंमृतकेतयोः ॥ शूद्रेतुविवाहाभावेषड्वर्षोर्ध्वंजात्याशौचमितिकेचित् तथाचकाश्यपांगिरसौशूद्रे त्रिवर्ष-

न्यूनेतुमृतेशुद्धिस्तुपंचभिः ॥ अतऊर्ध्वंमृतेशूद्रेद्वादशाहोविधीयते ॥ षड्वर्षांतमतीतोयः शूद्रःसम्रियतेयदि ॥ मा-
सिकंतुभवेच्छौचमित्यांगिरसभाषितं ॥ मेधातिथिरपि प्रागष्टमाच्छिशुः प्रोक्तोन्यैस्त्वाषोडशाद्बालइति येपिषो-
डशाद्बाल्यनिवृत्तिमाहुस्तेषामप्यष्टमादूर्ध्वंमासिक्येवशुद्धिः उर्ध्वंतुषड्भ्योवर्षेभ्यः शुद्धिः शूद्रस्यमासिकीतिस्मृ-
तेः अष्टवर्षस्यमासइत्यन्यत्रोक्तमित्याह ॥ अपरार्केशंखस्तुविवाहाभावेषोडशवर्षोर्ध्वंमासमाह अनूढभार्यःशूद्र-
स्तुषोडशाद्वत्सरात्परं मृत्युंसमधिगच्छेच्चेन्मासात्तस्यापिबांधवाः ॥शुद्धिंसमधिगच्छंतिनात्रकार्याविचारणेति ॥य-
त्तुमदनपारिजातेहारितः आमौंजीबंधनाद्विप्रः क्षत्रियश्चधनुर्ग्रहात् ॥ आप्रतोदग्रहाद्वैश्यःशूद्रोवस्त्रद्वयग्रहादिति त-
त्रापिवस्त्रद्वयंषोडशवर्षपरमेवयत्तुमदनोद्वादशेवस्त्रद्वयमाह तन्निर्मूलं अत्रसदसच्छूद्रपरापदनापद्विषयाव्यवस्था॥
ऊढकन्यानांतुपितृगृहेप्रसवेएकरात्रंमरणेत्रिरात्रमितिविज्ञानेश्वरापरार्कौ माधवस्तु प्रसवेपित्रिरात्रंपित्रोः एक-
रात्रंबंधुवर्गस्य दत्तानारीपितुर्गेहेसूयेताथम्रियेतवा ॥ तद्बंधुवर्गस्त्वेकेनशुचिस्तज्जनकस्त्रिभिरितिब्राह्मोक्तेरित्याह
कल्पतरौशुद्धितत्त्वेचकौर्मे दत्तानारीपितुर्गेहेप्रधानेसूयतेयदा॥ म्रियतेवातदातस्याः पिताशुध्येत्त्रिभिर्दिनैः ॥ पति-
गृहेप्रसवेपित्रादीनामाशौचंनास्ति मृतौपित्रोस्त्रिरात्रमस्त्येव प्रत्ताप्रत्तासुयोषित्सुसंस्कृतासंस्कृतासुच ॥ मातापि-

त्रोस्त्रिरात्रंस्यादितरेषांयथाविधीतिमाधवीयेकार्ष्णाजिनिस्मृतेः ॥ सोदराणांतुभगिनीमृतौशुद्धितत्त्वेकौर्मे आदंता-
त्सोदरेसद्यआचूडादेकरात्रकम् ॥ आप्रदानात्त्रिरात्रंस्याद्दशरात्रमतःपरं ॥ बृहस्पतिस्तुपक्षिणीमाह श्वशुरयोर्भ-
गिन्यांचमातुलान्यांचमातुले ॥ पित्रोःस्वसरितद्वच्चपक्षिणींक्षपयेन्निशाम् ॥ पित्रोर्मृतौतुमाधवीयेवृद्धमनुः पि-
त्रोरुपरमेस्त्रीणामूढानांतुकथंभवेत् ॥ त्रिरात्रेणैवशुद्धिः स्यादित्याहभगवान्यमः ॥ भ्रातृभगिन्योः परस्परंपक्षिणी
परस्परमृतौभ्रातृभगिन्योः पक्षिणीभवेदितिब्राह्मात् ॥ षडशीतौचैवं त्रिंशच्छ्लोक्यां प्रेतेष्वाचार्यमातामहदुहि-
तृसुतश्रोत्रियर्त्विक्सयाज्यस्वस्रीयेषुत्रिरात्रंत्रिदिवसमशुचिः सोदकस्तूभयत्र ॥ पक्षिण्याशौचमृत्विग्दुहितृसुत-
सहाध्यायिबंधुत्रयांतेवासिश्वश्रूसुमित्रश्वशुरभगिनिकाभागिनेयप्रयाणे ॥ मातामह्यांचपित्रोः स्वसरिचविरेतौ-
मातुलेमातुलान्यांचाथोसज्योतिरेवस्वविषयनृपतौग्रामनाथेचनष्टे ॥ शिष्योपाध्यायबंधुत्रयगुरुतनयाचार्यभार्या-
सगोत्रानूचानश्रोत्रियेषुस्वगृहपरमृतौमातुलेचैकरात्रम् ॥ रात्रिंसब्रह्मचारिण्यथतुकथमपिस्वल्पसंबंधयुक्तेस्ना-
नंवासोयुतंस्यादिदमपिसकलंसर्ववर्णेषुतुल्यम् ॥ अत्रमूलंमाधवीयेमिताक्षरायांचज्ञेयं दौहित्रभागिनेययोरनूढ-

१ मरणे ।



योः पक्षिणीऊढयोस्त्रिरात्रं संस्थितेपक्षिणींरात्रिंदौहित्रेभगिनीसुते संस्कृतेतुत्रिरात्रंस्यादितिधर्मोव्यवस्थितइति-
वृद्धमनूक्तेःसंस्कृतेदाहेनेतिगौडाः तन्न विशेषवैयर्थ्यात् ॥ यत्रैकमातुलादौपक्षिण्येकाहावुक्तौतत्रसान्निधिविदेशा-
भ्यांव्यवस्था ॥ श्रोत्रियेस्वगृहेमृते त्रिरात्रं श्रोत्रियेतूपसंपन्नेत्रिरात्रमशुचिर्भवेदितिस्मृतेः एकग्रामस्थिते
त्वेकाहः बंधुत्रयमुक्तंमिताक्षरायां आत्मपितृष्वसुःपुत्राआत्ममातृष्वसुः सुताः ॥ आत्ममातुलपुत्राश्चविज्ञेया
आत्मबांधवाः ॥ पितुःपितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ॥ पितुर्मातुलपुत्राश्चविज्ञेयाः पितृबांधवाः ॥
मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः ॥ मातुर्मातुलपुत्राश्चविज्ञेयामातृबांधवाः ॥ अत्रपक्षिणी ॥
गौडास्तुसमानोदकानांत्र्यहोगोत्रजानामहःस्मृतं ॥ मातृबंधौगुरौ मित्रेमंडलाधिपतौतथेतिजाबालोक्तेर्मातृबं-
धुष्वेकमाहुः ॥ यत्तुमाधवीयेप्रचेताःमातृष्वसामातुलयोःश्वश्रूश्वशुरयोर्गुरोः ॥ मृतेचर्त्विजियाज्येचात्रिरात्रेणावि-
शुध्यतीति तत्स्वगृहमृतौज्ञेयं अन्यत्रतुवृद्धमनुःपित्रोःस्वसरितद्वच्चपक्षिणीक्षपयेन्निशां श्वशुरयोः संनिधौ-
त्रिरात्रमसन्निधौ पक्षिणी देशांतरेएकरात्रंशालकेपिस्वदेशेएकाहःदेशांतरेस्नानं आचार्यपत्नीपुत्रोपाध्याय-

१ मृते ।

मातुलश्वशुरश्वश्रूश्वशुर्यसहाध्यायिशिष्येष्वेकरात्रमितिमाधवीयेविष्णूक्तेः हरदत्तोप्येवमाह श्वशुर्यःशालकः
गौडाअप्येवं तदुक्तंषडशीत्यां एवंपित्रोर्भगिन्यौयेयेपितामहयोस्तथा ॥ येमातामहयोश्चैवभगिन्यौतत्प्रजाश्च
याः॥ मातुलाःस्वस्रपुत्रोश्वपत्न्यश्चैषांप्रजाश्चयाः॥ मातरश्चेतिसर्वेषुपक्षिणीस्वगृहेप्यहं ॥ एवंश्वशुरजामातृदौहित्र-
विपदिस्मृतं॥ पितामहीचपितामहश्चेत्येकशेषः॥ यत्तुवृद्धमनुः भगिन्यांसंस्कृतायांतुभ्रातर्यपिचसंस्कृते॥ मित्रे-
जामातरिप्रेतेदौहित्रेभगिनीसुते ॥ शालकेतत्सुतेचैवसद्यःस्नानेनशुद्धयति तद्भ्रात्रादौदेशांतरेशालकसुतजामात्रोः
स्वदेशेज्ञेयं ॥ विष्णुपुराणे ॥ असपिंडेस्ववेश्मनिमृतेएकरात्रंप्रधानगृहमृतौतुत्रिरात्रमितिमाधवः ॥ शुद्धितत्वेबृ-
हन्मनुः श्वशूद्रपतिताश्चांत्यामृताश्चेद्द्विजमंदिरे ॥ द्विजेत्युपलक्षणंसंबुद्धिर्वा ॥ शौचंतत्रप्रवक्ष्यामिमनुनाभाषितं
पुरा ॥ दशरात्राच्छुनिमृतेमासाच्छूद्रेभवेच्छुचिः ॥ द्वाभ्यांतुपतितेगेहेचांत्येमासचतुष्टयात् ॥ अंत्यजेवर्जयेद्गे-
हमित्येवंमनुरब्रवीत् ॥ अंत्योम्लेच्छः अंत्यजः श्वपाकइतिवाचस्पतिः मनुः द्विजस्यमरणेवेश्मविशुध्यतिदिनत्रया-
त् ॥संवर्तःगृहशुद्धिंप्रवक्ष्यामिअंतःस्थशवदूषिते ॥प्रोत्सृज्यमृन्मयंभांडंसिद्धमन्नंतथैवच ॥गोमयेनोपलिप्याथछा-
गेनघ्रापयेत्ततः ॥ब्राह्मणैर्मंत्रपूतैश्चहिरण्यकुशवारिभिः ॥सर्वमभ्युक्षयेद्वेश्मततःशुध्यत्यसंशयं॥ क्रियाकर्तुस्तुमूल्या-



भावेपिपूर्णाशौचं निरन्वयेसापिंडेतुमृतेसातिदयान्वितः तदाशौचंपुराचीर्त्वाकुर्यात्तुपितृवत्क्रियामितिमाधवीयेब्रा-
ह्मोक्तेः ॥ दिवोदासीये सगोत्रोवासगोत्रोवा योग्निंदद्यात्सखेनरः॥ सोपिकुर्यान्नवश्राद्धंशुध्येत्तुदशमेहनि ॥ युद्धह-
तेतुमनुःउद्यतैराहवेशस्त्रैःक्षयधर्महतस्यच ॥सद्यःसंतिष्ठतेयज्ञस्तथाशौचमितिस्थितिः॥यज्ञोंत्यकर्मसद्यस्तेदैवत्यर्थः
यत्तुआहवेपिहतानांचएकरात्रमशौचकमितितद्युद्धक्षतेकालांतरमृतेज्ञेयं असंनिधौस्नानंसंनिधावेकाहइतिमाध-
वः॥यत्तुभारतेराजधर्मेषु अशोच्योहिहतः शूरः स्वर्गलोकेमहीयते॥ नह्यन्नमुदकंतस्यनस्नानंनाप्यशौचकमितिश्रा-
द्धादिनिषेधः सपुत्राद्यभावपरः अतएवतत्रकर्णादीनांश्राद्धाद्युक्तं अन्येतुयतिवद्दशपिंडनिषेधमाहुः शुद्धितत्वे-
ग्निपुराणे दंष्ट्रिभिः शृंगिभिर्वापिहताम्लेच्छैश्चतस्करैः॥ येस्वाम्यर्थेहतायांतिराजन्स्वर्गेनसंशयः॥ सर्वेषामेववर्णा-
नांक्षत्रियस्यविशेषतः ॥ यत्तुबृहस्पतिः डिंबाहवेविद्युताचराज्ञागोविप्रपालने ॥ सद्यःशौचंमृतस्याहुस्त्र्यहंवान्येम-
हर्षयः ॥ तत्रशस्त्रंविनातेनवापराङ्मुखहतेत्रिरात्रंराज्ञावध्येहतेसद्यःशौचमन्यत्रत्रिरात्रं तत्रैवव्याघ्रः॥क्षतेनम्रियते
यस्तुतस्याशौचंभवेद्द्विधा ॥ आसप्ताहात्त्रिरात्रंस्याद्दशाहमतरःपरं ॥ शस्त्राघातेत्र्यहादूर्ध्वंयदिकश्चित्प्रमीयते ॥

आशौचंप्राकृतंतत्रसर्वत्रवर्णेषुनित्यशः ॥ शस्त्राघातिक्षतावनाशंवस्पर्शेनिर्हारेचतद्गृहवासेतदन्नाशनेचशवजातीयंपू-
र्णाशौचं तद्गृहवासमात्रेत्र्यहः उभयाभावेएकाहः भृतिग्रहेणनिर्हारेपूर्णोमासः विजातीयनिर्हारेशवजातीयं भृतिग्र-
हणे द्विगुणं आपदिसमं सोदकनिर्हारेपूर्णं शवालंकरणेज्ञानतः कृच्छ्रपादः अज्ञानादुपवासः अनाथसवर्णनिर्हरणे-
ग्निदानेचानंतफलंस्नानमात्रेण शुद्धिः वोढा चैवाग्निदाताचसद्यः स्नात्वाविशुध्यतीत्यपरार्के वृद्धपराशरोक्तेः ॥ मातु-
लत्वादिसंबंधेस्नेहेत्वात्रिरात्रं॥गौतमव्याख्यायांवृद्धात्रिःसूतकाद्द्विगुणंशावंशावाद्द्विगुणमार्तवं। आर्तवाद्द्विगुणा-
सूतिस्ततोपिशवदाहकः।अनुगमनेसपिंडेनदोषःअसपिंडेतुसमवर्णेस्नानंघृताशनंपक्षिणीच उत्तमेस्नानमात्रंरोदने
तुशूद्रस्यशूद्रेस्पर्शेविनासंचयनात्पूर्वमेकाहःउर्ध्वंसज्योतिरितिमाधवः शुद्धितत्वेपारस्करः अस्थिसंचयनादूर्ध्वंमा-
संयावद्द्विजातये दिवसेनैवशुध्यंतिवाससांक्षालनेनच॥सजातेर्दिवसेनैवत्र्यहात्क्षत्रियवैश्ययोः॥सपिंडानांनदोषः॥
मिताक्षरायांपारस्करस्तुमृतस्यबांधवैःसार्धंकृत्वातुपरिदेवनं ॥वर्जयेत्तदहोरात्रंदानश्राद्धादिकर्मचेतिसर्वत्रैकरात्र-
माहआशौच्यान्नभक्षणेत्वज्ञानेनजरणावधि ज्ञानतः शूद्रस्यस्नानमात्रं॥अथदासाशौचं तत्रस्वदास्युत्पन्नस्यदा-
सस्यस्वसपिंडमृतौस्नानमात्रात्स्वामिकार्येस्पृश्यत्वंभक्तदासस्यत्र्यहोर्ध्वं सद्यःस्पृश्योगर्भदासो भक्तदासस्त्र्यहा-



च्छुचिरितिमिताक्षरायांस्मृत्यंतरात्॥ मूल्यकर्मकराः शूद्रादासीदासास्तथैवच ॥ स्नानेशरीरसंस्कारेगृहकर्मण्यदू-
षिताइतिशातातपोक्तेश्च ॥ अत्रैवदत्तादित्रयोदशदासानांस्वाम्याशौचसमसंख्यदिनोर्ध्वंस्वस्यमासाद्याशौचेस-
त्यपिस्वामिकार्येस्पृश्यता दासांतेवासिभृतकाःशिष्याश्चैकवासिनः ॥स्वामितुल्येनशौचेनशुध्यंतिमृतसूतकेइति
बृहस्पतिस्मृतेः ॥ स्वस्यादृष्टार्थकार्येमासाद्याशौचंसर्वेषामस्त्येव एवंदास्याअपि प्रसूतौतुतस्याः स्वामिकार्येपिमा-
समात्रं दासीदासश्चसर्वोवैयस्यवर्णस्ययोभवेत् ॥तद्वर्णस्यभवेच्छौचंदास्यामासस्तुसूतकमित्यांगिरसोक्तेःषडशी-
तावपि स्वामिशौचेनदासाद्याःस्पृश्यामासात्तुकर्मसु ॥ योग्याःस्युर्मासतोदासीसूतीचेत्स्पृश्यतामियात् ॥
दासास्तुनारदोक्ताः ॥ गृहेजातस्तथाक्रीतोलब्धोदायादुपागतः ॥ अनाकालभृतस्तद्वदाहितःस्वामिनाचयः॥
मोचितोमहतश्चर्णाद्युद्धप्राप्तः पणेजितः॥ तवाहमित्युपगतः प्रव्रज्यावसितः कृतः॥ भक्तदासश्चविज्ञेयस्तथैववड-
वाहृतः॥ विक्रेताचात्मनः शास्त्रेदासाः पंचदशस्मृताः॥ वडवादासीतल्लोभाद्दासोजातइत्यर्थः ॥दासादेः स्वामित-
त्सपिंडमरणेतुविष्णुः पत्नीनांदासानामानुलोम्येनस्वामितुल्यमाशौचंमृतेस्वामिन्यात्मीयमिति ॥ प्रतिलोम-
दासादेर्नाशौचं वर्णानामानुलोम्येनप्रतिलोमतइति याज्ञवल्क्योक्तेः ॥ शास्त्रातिक्रमेणदास्यकरणेपिनाशौचं

आनुलोम्येनाशौचमितिविष्णूक्तेः ॥ सर्वाशौचंरजोदर्शनंचरात्रौजातंचेत्तदारात्रिंत्रिभागांकृत्वाद्येभागद्वयेपूर्वदिनं अंत्येतूत्तरं यद्वाप्रागर्द्धरात्रात्प्राग्वासूर्योदयात्पूर्वदिनं अनंतरंत्तूत्तरमिति पक्षत्रयंमिताक्षराद्यैरुक्तं अत्रदेशाचारतो-व्यवस्था ॥ अथातिक्रांताशौचं तत्राशौचमध्येज्ञातेतच्छेषमात्रं नाधिकंप्रोषितेकालेशेषः स्यादितियाज्ञवल्क्योक्तेः ॥ प्रसवेअतिक्रांताशौचंनास्त्येव नाशुद्धिः प्रसवाशौचेव्यतीतेषुदिनेष्वपीतिदेवलोक्तेः तत्रापिपितुः स्नानंभव-त्येव ॥ आशौचोत्तरंज्ञातेतुवृद्धवसिष्ठः मासत्रयेत्रिरात्रंस्यात्षण्मासेपक्षिणीतथा ॥अहस्तुनवमादर्वागूर्ध्वंस्नानेनशु-ध्यति॥इदंपूर्णजात्याशौचविषयेएवनतुत्रयोवस्थानिमित्तेअतिक्रांतेदशाहेत्वितिमनूक्तेः॥ यत्तुमाधवीये देवलः आ-त्रिपक्षात्त्रिरात्रंस्यात्षण्मासात्पक्षिणीततः ॥ परमेकाहमावर्षादूर्ध्वंस्नातोविशुद्ध्यतीति तदनापदिज्ञेयं इदंचैकदेशे देशांतरेतुस्नानमात्रं देशांतरमृतंश्रुत्वाक्लीबेवैखानसेयतौ॥मृतेस्नानेनशुध्यंतिगर्भस्रावेचगोत्रिणइतिपराशरोक्ते-रितिविज्ञानेश्वरः॥माधवीयेविष्णुस्तु अर्वाक्त्रिपक्षात्त्रिनिशंषण्मासाच्चदिवानिशं ॥अहः संवत्सरादर्वाग्देशांतरमृ-तेष्वपीत्याह अत्रापदनापद्भ्यांव्यवस्था॥देशांतरंत्वाहबृहस्पतिः महानद्यंतरंयत्रगिरिर्वाव्यवधायकः॥ वाचोयत्र विभिद्यंतेतद्देशांतरमुच्यते॥ वाचोदेशभाषाः तद्भेदउभयशेषइतिद्वावेवपक्षौवाशब्दस्यैकत्वात्॥ मातापित्रोस्तुस-



र्वत्रपूर्णमेवाशौचंपितरौचेन्मृतौस्यातांदूरस्थोपिहिपुत्रकः॥श्रुत्वातद्दिनमारभ्यदशाहंसूतकीभवेदितिपारस्करोक्तेः स्त्रीपुंसयोः परस्परंसपत्न्योश्चैवमितिस्मृत्यर्थसारे सापत्नमातुस्तुत्रिरात्रंव्याघ्रः तुल्यंवयसिसर्वेषामतिक्रांतेतथैवच॥ आशौचसंपातेनिर्णयः॥ तत्रपूर्णाशौचस्यद्वितीयाद्यहःसुयदिसजातीयंशावेजननंवासमंन्यूनंवास्यात्तदापक्षषट्केपूर्व-शेषेणशुद्धिः अंतराजन्ममरणेशेषाहोभिर्विशुध्यतीतियाज्ञवल्क्योक्तेः इदंपूर्णाशौचे त्र्यहाद्यल्पाशौचसंपातेतू-त्तरमेवेतिगौडाः हरदत्तोप्येवं अन्येतुतत्रापिपूर्णेनशुद्धिमाहुः यदातुजननेशावंसमन्यूनमधिकंवातदापरमेवका-र्येनपूर्वशेषाच्छुद्धिः अस्पृश्यत्वाधिक्यात् शावेनशुध्यतेसूतिर्नसूतिःशावशोधिनीतिषड्विंशन्मतात् मरणोत्पत्ति-योगेतुगरीयोमरणंभवेदितिकौर्माच्च॥ षडशीतौतुस्वभावबहुसूतिस्तुन्यूनशावाविशोधिनीतिशावस्यापिसूत्यानिवृ-त्तिरुक्ता त्र्यहादिशावमध्येसजातीयं विजातीयं वादीर्घकालमुत्तरंचेत्तदानपूर्वेणशुद्धिरित्यपरार्कः शुद्धिविवे-केतुशावेनशुध्यतेसूतिरित्यविशेषात्तत्रापिपूर्वेणशुद्धिरुक्तातन्न उत्तरस्यकालाधिक्येनबलत्वात् यथात्रिरात्रेप्रक्रां-तेदशाहंप्रविशेद्यदि ॥ आशौचं पुनरागच्छेत्तत्समाप्यविशुद्ध्यतीतियमोक्तेरितिमाधवहरदत्तमिताक्षरादयः इदं शावेनशुध्यतेसूतिरित्यस्यबाधकं अन्यथावचनवैयर्थ्यात् तेनसूत्यांशावाशौचेत्रिरात्रशुद्धावपिशावनिमित्तमस्पृश्य-

त्वंभवत्येवगरीयोमरणंभवेदितिकौर्मात् पूर्वशेषेशुद्धेरपवादमाहशातातपःरात्रिशेषेद्व्यहाच्छुद्धिर्यामशेषेशुचिस्त्र्य-
हात् अत्ररात्रिशब्दोहोरात्रपरः अहःशेषे द्वाभ्यांप्रभातेतिसृभिरितिशंखलिखितोक्तेः अथयदिदशरात्रसन्निपा-
तेपुराद्यंदशरात्रमाशौचमानवमाद्दिवसादतऊर्ध्वंद्विरात्रेणव्युष्टायांत्रिरात्रेणेतिबौधायनोक्तेश्चेतिपराशरमाधवहार-
लताशुद्धितत्त्वादयःगौडा अप्येवं रात्रिमात्रावशिष्टेइतितुविज्ञानेश्वरादयःअत्रदेशाचारतोव्यवस्थाविशेषोनिर्णय-
सिंधौज्ञेयः॥रात्रिशेषेत्रिरात्रादिसंपातेतुपूर्वशेषणैवशुद्धिः पूर्वाशौचांतर्वर्धितद्वित्रिदिनमध्येधिकाशौचांतरपातेतुव-
र्धितस्याल्पत्वाद्धिकेनैवशुद्धिः नचवर्धितस्यपूर्वशेषत्वंरात्रिशेषेपूर्वशेषशुध्यपवादेनैमित्तिकावृत्तिन्यायोज्जीव-
नात् अपवादाभावेउत्सर्गप्राप्तेः अपवादांतरमाहशंखः मातर्यग्रेप्रमीतायामशुद्धौम्रियतेपिता ॥ पितुःशेषेणशुद्धिः
स्यान्मातुः कुर्यात्तुपक्षिणीम् ॥ पित्राशौचमध्येमातृमृतौपक्षिणीमधिकांकुर्यादितितुर्यपादार्थः इदंदशमदिनात्पूर्व-
मातृमरणे दशम्यांरात्रौतत्प्रभातेवामातृमरणेव्यहत्र्यहयोः पक्षिण्यासमुच्चयइत्येकेतन्न संख्यांतरापत्त्याव्यहादि-
श्रुतिबाधापत्तेः अतएवैकादेयाषड्देयाइत्यादिश्रुतसंख्याबाधापत्तेः समुच्चयोनिरस्तोद्वादशाध्याये मातुरन्वारोह-
णेतुनपक्षिणी यदानारीविशेदग्निंप्रियस्याप्रियवांच्छया ॥तदाशौचंविधातव्यंभर्त्राशौचक्रमेणहीतिपृथ्वीचंद्रोदयेल-



घुहारीतोक्तेः मातापित्रोर्भर्त्तुश्चान्यसपिंडाशौचेननिवृत्तिर्नास्त्येव श्रुत्वातद्दिनमारभ्यदशाहंसूतकीभवेदितिस्मृ-
तेः भर्त्राशौचोत्तरमन्वारोहणेत्रिरात्रं त्र्यहाशौचेतुनिवृत्तेश्राद्धंप्राप्नोत्तिशास्त्रतइत्यपरार्केब्राह्मोक्तेःसहगमनेतूसंपूर्ण
युद्धहतस्यसद्यःशौचेन्वारोहणेब्राह्मोक्तेस्त्रिरात्रत्वात् भर्त्तुरपित्र्यहेणपिंडदानंएकचितौतुसद्यःशौचं षडशीतौ
पूर्वाशौचेनयाशुद्धिः सूतकेमृतकेचसा ॥ सूतिकामग्निदंहित्वाप्रेतस्यचसुतानपि ॥ तथाशावादिमध्येपुत्रोत्पत्तौ
जातकर्मादिकार्यमेव मातुः पक्षिणीमध्येपितुरेकादशाहवृषोत्सर्गादिकार्यमेवेतिदेवयाज्ञिकः ॥ अथाशौचापवादः
शुद्धितत्त्वेकौर्मे ॥ सद्यःशौचंसमाख्यातंदुर्भिक्षेवाप्युपद्रवे ॥ डिंबाहवहतानांचविद्युतापार्थिवैर्द्विजैः ॥ उपद्रवे-
त्यंतमारके ॥ पराशरोपि उपसर्गमृतेचैवसद्यःशौचंविधीयते ॥ उपसर्गोत्यंतमारकइतिशूलपाणिहारलतादयः ॥
तथामुमूर्षोर्दानादौनाशौचं आपद्यपिचकाष्ठानांसद्यःशौचंविधीयते इतियाज्ञवल्क्योक्तेः शुद्धिरत्नाकरेदक्षोपि
स्वच्छकालेत्विदं सर्वंसूतकंपरिकीर्तितं ॥ आपद्गतस्यसर्वस्यसूतकेपिनसूतकं ॥ प्रचेताः ॥ कारवःशिल्पिनो
वैद्यादासीदासास्तथैवच ॥ राजानोराजभृत्याश्चसद्यःशौचाः प्रकीर्तिताः ॥ कारवः सूपकारावाशिल्पिनश्चै-
लधावकाः ॥ लघुविष्णुः व्रतयज्ञविवाहेषुश्राद्धेहोमेर्चनेजपे ॥ आरब्धेसूतकंनस्यादनारब्धेतुसूतकं ॥ प्रारंभो

वरणंयज्ञेसंकल्पोव्रतसत्रयोः ॥ नांदीमुखंविवाहादौ श्राद्धेपाकपरिक्रिया ॥ यत्तुविष्णुः नव्रतिनांव्रतइतितदप्या-
रब्धपरं ॥ त्रिंशच्छ्लोक्यां नप्रारब्धेषुदानोपनयनयजनश्राद्धयुद्धप्रतिष्ठाचूडातीर्थार्थयात्राजपपरिणयनाद्युत्सवेष्वे-
तदर्थे ॥ अपिशब्देनभारतहरिवंशादिश्रवणेपिनाशौचंगृहीतनियमस्यापिनस्यादन्यस्यकस्यचिदितिब्राह्मोक्तेः ॥
चंद्रिकायांजाबालिः संध्यापंचमहायज्ञानैत्यकंस्मृतिकर्मच तन्मध्येहापयेत्तेषांदशाहांतेपुनःक्रिया ॥ ग्रहणेत्वाशौ-
चमध्येपिश्राद्धादानादिकार्यमेव तावदेवभवेच्छुद्धिर्यावन्मुक्तिर्नदृश्यतेइतिलैंगोक्तेः अथमृतदोषेहेमाद्रौषट्त्रिं-
शन्मतकौर्मयोः ॥ व्यापादयेद्यआत्मानंस्वयमग्न्युदकादिभिः ॥ विहितंतस्यनाशौचंनापिकार्योदकक्रिया ॥
भविष्येस्वेच्छयामरणंविप्रश्शृंगिदंष्ट्रिसरीसृपैः ॥ अंत्यांत्यजविषोद्बंधैरात्मनाचैवताडनैः ॥ पाखंडमाश्रिताश्चैवम-
हापातकिनस्तथा ॥ स्त्रियश्चव्यभिचारिण्यआरूढपतितास्तथा ॥ नतेषांस्नानसंस्कारौनश्राद्धंनसपिंडनं ॥
ब्राह्मे एतानिपतितानांतुयः करोतिविमोहितः ॥ तप्तकृच्छ्रद्वयेनैवतस्यशुद्धिर्नचान्यथा ॥ इदंकामतः अज्ञाने-
त्वर्द्धं स्पर्शाश्रुणोर्ज्ञानतस्त्रिरात्रं अज्ञानेएकोपवासइत्यादिनिर्णयसिंधौज्ञेयं इदंदर्पाद्बुद्धिपूर्वंमृतेज्ञेयं अबुद्धिपू-
र्वेप्रमादहतेतुसर्वंकार्यं अथकश्चित्प्रमादेनम्रियेताग्न्युदकादिभिः ॥ तस्याशौचंविधातव्यंकर्तव्याचोदकक्रियेत्यां-

गिरसोक्तेः प्रमादमरणेत्रिरात्राशौचमितिशुद्धितत्त्वादयोगौडाः दशाहमितिदाक्षिणात्याः अस्यापवादोहेमाद्रौ
भविष्ये प्रमादादिच्छयावापिनकुर्यात्सर्पतोमृते ॥ नागपूजांविनानेत्यर्थः ॥ तत्रप्रमादमृतेदुर्मरणनिमित्तंदानाद्यु-
क्तंशातातपेन व्याघ्रेणनिहतेविप्रेविप्रकन्यांविवाहयेत् ॥ सर्पदष्टेनागबलिर्देयःसर्पश्चकांचनइत्यादिनातन्निर्णय-
सिंधौज्ञेयं ॥ सर्पदष्टेपिव्यासः सौवर्णभारनिष्पन्नंनागंकृत्वातथैवगां ॥ व्यासायदत्वाविधिवत्पितुरानृण्यमाप्तवा-
न् ॥ हेमाद्रौभविष्ये पंचम्यांपन्नगंहैमंस्वर्णेनैकेनकारयेत् ॥ क्षीराज्यपात्रमध्यस्थंपूज्यंविप्रायदापयेत् ॥ प्रायश्चित्त-
मिदंप्रोक्तंनागदष्टस्यशंभुना ॥ दर्पात्सर्पमृतेनारायणबलिनास्यसमुच्चयः तथावैधमरणेपिनदोषः वृद्धः शौचस्मृ-
तेर्लुप्तःप्रत्याख्यातभिषक्क्रियः॥ आत्मानंघातयेद्यस्तुभृग्वग्न्यनशनांबुभिः॥ तस्यत्रिरात्रमाशौचंद्वितीये त्वस्थिसंच-
यः । तृतीयेतूदकंकृत्वाचतुर्थेश्राद्धमाचरेदितिवृद्धगार्ग्योक्तं अपरार्केब्रह्मगर्गः योजीवितुंनशक्नोतिमहाव्याध्यु-
पपीडितः ॥ सोग्न्युदकंमहायात्रांकुर्वन्नामुत्रदुष्यति॥तच्चप्रयागभिन्नेदेशेरोगिणामेव तदपिजीर्णवानप्रस्थस्यैवेति
विज्ञानेश्वरादयः प्रयागेत्वरोगिणामपिविशेषतः शूद्रस्यान्यत्रापि अब्राह्मणोवास्वर्गादिमहाफलजिगीषया ॥
प्रविशेज्ज्वलनंदीप्तंकरोत्यनशनंतथेत्यादिपुराणात् ॥ इदंवृद्धादिमरणंयद्यपिभृग्वाग्निपतनैश्चैववृद्धादिमरणंतथेति

माधवीयेआदिपुराणोक्तेः कलौनिषिद्धं तथापिप्रयागेभवत्येव येवैतन्वांविसृजंतीतिश्रुतेः नलोकवचनात्तातनवेद-
वचनादपि मतिरुत्क्रमणीयातेप्रयागमरणंप्रतीतिभारतमात्स्योक्तेः॥ तत्रयोमुंचतिप्राणान्वटमूलेषुसुंदरि॥ सर्वलो-
कानतिक्रम्यममलोकंप्रपद्यते इतिवाराहोक्तेः॥ अत्रदशाहादिपूर्णाशौचमितिभट्टाः युक्तंतुत्रिरात्रं अनशनमृतो-
क्तेः दिवोदासोप्येवं॥ यश्चपूर्वोक्तानामशनिहतानामग्निजलप्रविष्टानां भृगुसंग्रामदेशांतरमृतानांजातदंतानांच
त्रिरात्रमितिशुद्धितत्त्वेकाश्यपोक्तेः आत्मघातिनोदाहाशौचादिनिषेधः सतदानीमेव वर्षांतेतुसर्वंकुर्यात् गोब्राह्म-
णहतानांचपतितानांतथैवच॥ ऊर्ध्वंसंवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकमितिहेमाद्रौषड्त्रिंशन्मतात्॥ तत्रात्मव-
धप्रायश्चित्तंनारायणबलिश्चोक्तः॥ तत्रैव कृत्वाचांद्रायणंपूर्वंक्रियाकार्यायथाविधि॥ नारायणबलिःकार्योलोक-
गर्हाभयान्नरैः॥ पिंडोदकक्रियाः पश्चाद्वृषोत्सर्गादिकंचयत्॥ एकोद्दिष्टानिकुर्वीत सपिंडीकरणंतथा॥ मदनरत्ने
ब्राह्मेतु प्रमादादपिनिःशंकस्त्वकस्माद्विधिचोदितः॥ चंडालैर्ब्राह्मणैश्चोरैर्निहतोयत्रकुत्रचित्॥ तस्यदाहादिकं का-
र्यंयस्मान्नपतितस्तुसः॥ चांद्रायणंततःकृच्छ्रद्वयंतस्यविशुद्धये॥ यद्वाकृच्छ्रान्पंचदशकृत्वातुविधिनादहेत्॥बुद्धि-
पूर्वमृतानांतुत्रिंशत्कृच्छ्रंसमाचरेदित्युक्तंस्मृतिरत्नावल्यांतद्द्विगुणंप्रायश्चित्तंकृत्वावर्गाप्यब्दात्सर्वंकार्यमित्युक्तं-



नारायणबलिस्तुमिताक्षरायांमत्कृतेनिर्णयसिंधौज्ञेयः विदेशमृतेत्वस्थ्नामेवसंभवेदाहः तदभावेपालाशवृंतैःतद-
भावेकुशैःविदेशमरणेस्थीनिआहृत्याभ्यज्यसर्पिषा॥ अस्थ्नामलाभेपर्णानिशकलान्युक्तयावृता॥ दाहयेदस्थिसं-
ख्यानिततः प्रभृतिसूतकं॥ हेमाद्रौषट्त्रिंशन्मते कुर्याद्दर्भमयंप्रेतंकुशैस्त्रिशतषाष्टिभिः॥ पालाशीभिःसमिद्भि-
र्वासंख्याचैवंप्रकीर्तिता॥ मदनरत्नेयज्ञपार्श्वः शिरस्यशीत्यर्द्धंदद्यात्ग्रीवायांतुदशैवतु॥ बाह्वोश्चैकशतंदद्या-
द्दशचैवांगुलीषुच॥ उरसित्रिंशतंदद्याद्विंशतिंजठरोदरे॥ द्वादशार्द्धंवृषणयोरष्टार्धंशिश्नएवतु॥ ऊर्वोश्चैकशतं
दद्यात्त्रिंशतंजंघयोर्द्वयोः॥ पादांगुलीषुदशदद्यादेतत्प्रेतस्यकल्पनं॥ मस्तकेनारिकेलंतुअलाबुंतालुकेतथा॥
पंचरत्नंमुखेन्यस्याजिह्वायांकदलीफलं॥ चक्षुषोस्तुकपर्दौद्वौनासिकायांतुकालकं॥ कर्णयोर्ब्रह्मपत्राणिकेशे
वटप्ररोहकाः॥ नालकंकमलानांतुअंत्रस्थानेविनिक्षिपेत्॥ मृत्तिकातुवसाधातुर्हरितालकगंधकौ॥ शुक्रे
तुपारदंदद्यात्पुरीषेपित्तलंतथा॥ संधिषुतिलपिष्टंतुमांसेस्याद्यवपिष्टकं॥ मधुस्याल्लोहितस्थानेत्वचःस्थाने
मृगत्वचा॥ स्तनयोर्गुंजकेदेयेनासायांशतपत्रकं॥ कमलंनाभिदेशेस्याद्वृंताकेवृषणाश्रिते॥ लिंगेचरक्त-
मूलंतुपरिधानंदुकूलकं॥ गोमूत्रंगोमयंगंधंसर्वौषध्यादिसर्वतः॥ क्रियानिबंधेगारुडेत्वेतदंते घृतंनाभ्यांप्रदेयं

स्यात्कौपीनेचत्रपुस्मृतं ॥ मौक्तिकेस्तनयोर्मूर्ध्निकुंकुमेनविलेपनं ॥ प्रोषितस्यवार्ताश्रवणाभावेतुपितुः पंचदशा-
ब्दानिप्रतीक्षातदन्यस्यद्वादशाब्दानीतिमदनरत्नेउक्तं तत्रपत्नीपुत्रयोः पूर्वमगृहीताशौचयोः पूर्णाशौचं गृहीता-
शौचयोस्त्रिरात्रं द्वादशवर्षप्रतीक्षोत्तरंदाहेतुपुत्रादीनांसर्वेषांत्रिरात्रमितिकल्पतरुः पर्णशरदाहोत्तरमस्थ्युपलंभे
तुमदनरत्नेब्राह्मे अथपार्णनरे दग्धेपत्रन्यासेकृतेसति ॥ गतेष्वग्निषुतद्देहोयदूर्ध्वंलभ्यतेक्वचित् ॥ तदार्धदग्ध-
काष्ठानितान्निर्मथ्यतंदहेत् ॥ यद्यर्द्धदग्धकाष्ठंतुतदीयंनैवलभ्यते ॥ तदातदस्थिखंडंतुनिक्षेप्तव्यंमहाजले ॥
अथप्रेतदाहकालः ॥ प्रत्यक्षशवदाहेनशोधनं आशौचमध्येसंस्कारेसति संभवेशोध्यंतदंतेशोध्यमेव अब्दांतेउ-
त्तरायणंश्रेष्ठं तत्रापिकृष्णपक्षः भरणीकृत्तिकारोहिण्यार्द्रामघाश्लेषामूलत्रिपादज्येष्ठाधनिष्ठादिपंचजन्मदशमै-
कोनविंशताराः चतुर्थाष्टमद्वादशचंद्रादिनक्षयवैधृतिव्यतीपातपरिघविष्टिकरणनंदाभद्रात्रयोदशीचतुर्दशीतिथि-
शुक्रभौमशनिवारगुरुशुक्रास्तपौषमलमासाः सर्वथावर्ज्याः मन्वादियुगादिसंक्रांतिदर्शेषुकिमपिनशोध्यंमूलं
विशेषश्चनिर्णयसिंधौज्ञेयः ॥ इति श्रीनारायणभट्टसूनुकमलाकरभट्टकृतेशूद्रधर्मतत्त्वे आशौचनिर्णयः ॥ अथ
शूद्रस्यौर्ध्वदेहिकप्रयोगः ॥ तत्राधिकारिणोनिर्णयसिंधौज्ञेयाः सर्वाभावेधर्मपुत्रोवाकार्यः अपुत्रेणसुतः कार्यो



यादृक्तादृक्प्रयत्नतः ॥ पिंडदानक्रियाहेतोर्धर्मसंस्थापनायचेतिव्यासोक्तेः ॥ दिवोदासीयेदृष्ट्वास्थानस्थमासन्न-
मर्धोन्मीलितलोचनं ॥ भूमिस्थंपितरंपुत्रोयद्विदानंप्रदापयेत् ॥ तद्विशिष्टंगयाश्राद्धादश्वमेधशतादपि ॥ भारते
शुक्लपक्षेदिवाभूमौगंगायांचोत्तरायणे ॥ धन्यास्तातमरिष्यंतिहृदयस्थेजनार्दने ॥ हेमाद्रौवाराहेव्यतीपातोथसं-
क्रांतिस्तथैवग्रहणंरवेः ॥ पुण्यकालास्तदासर्वेयदामृत्युरुपस्थितः ॥ तत्रैवव्यासः आसन्नमृत्युनादेयागौःसवत्सा
तुपूर्ववत् ॥ तदभावेतुगौरेवनरकोत्तारणायवै ॥ मदनरत्नेजातूकर्ण्यः उत्क्रांत्यादीनिदानानिदशदद्यान्मृतस्यतु ॥
गोभूतिलहिरण्याज्यवासोधान्यगुडानिच ॥ रूप्यंलवणमित्याहुर्दशदानान्यनुक्रमात् ॥ एतानिदशदानानिनरा-
णांन्मृत्युजन्मनोः ॥ कुर्यादभ्युदयार्थंतुप्रेतेपिहिपरत्रवै ॥ ब्राह्मे ताम्रपात्रंतिलैःपूर्णंप्रस्थमात्रंद्विजायतु ॥ सहिरण्यं
चयोदद्याच्छ्रद्धावित्तानुसारतः ॥ सर्वपापविशुद्धात्मालभतेगतिमुत्तमां ॥ उत्क्रांतिवैतरण्यौचदशदानानिचैवहि ॥
प्रेतेपिकृत्वातंप्रेतंशवधर्मेणदाहयेत् ॥ क्रियानिबंधेगारुडेत्वष्टौदानान्युक्तानि तुलसीसन्निधौकृत्वाशालग्रामशि-
लांतथा ॥ तिलालोहंहिरण्यंचकार्पासंलवणंतथा ॥ सप्तधान्यंक्षितिर्गावएकैकंपावनंस्मृतं ॥ तिलपात्रंयथाशक्ति
शय्यादानंच कारयेदितिपरिशिष्टे ॥ म्रियमाणस्यकर्णेतुपुण्यमंत्रान्जपेत्ततः ॥ मुमूर्षोर्मधुपर्कदानमुक्तंवाराहे दृष्ट्वा

सुविव्हलंह्येनंयममार्गानुसारिणं ॥ प्रयाणकालेतुनरोमंत्रेणविधिपूर्वकं ॥ मधुपर्कंत्वरंग्गृह्यइमंमंत्रमुदीरयेत् ॥ गृहाणचेमंमधुपर्कमाद्यंसंसारनाशनकरंत्वमृतेनतुल्यं ॥ नारायणेनरचितंभगवत्प्रियाणांदाहेनशांतिकरणंसुरलोकपूज्यं ॥ अनेनैवतुमंत्रेण दद्याच्चमधुपर्ककं ॥ नरस्यमृत्युकालेतुपरलोकसुखावहं ॥ दैवजानीयेप्येवं ॥ अथप्रयोगः पुत्रादिरासन्नमृत्युंपित्रादिंज्ञात्वाषडब्दंत्र्यब्दंसार्द्धाब्दंवाप्रायश्चित्तंकारयेत् ॥ यथा सप्तपंचत्रीनेकंवाद्विजपर्षदमुपवेश्यार्द्रवासाः सुवर्णरूप्ययोर्निष्कंतदर्द्धंवागोस्तच्चतुर्गुणंवृषस्यैत्येवंगोवृषमूल्यंनिधायसाष्टांगंप्रणम्य तैः किंतेकार्यमितिपृष्टे ममजन्मप्रभृत्यद्ययावत् ज्ञानाज्ञानकामाकामसकृदसकृत्कायिकवाचिकमानासिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतज्ञाताज्ञातसकलपातकानांपातकोपपातकसंकरीकरणापात्रीकरणजातिभ्रंशीकरणप्रकीर्णपातकानांनिरासार्थमनुग्रहंकृत्वाप्रायश्चित्तमुपदिशंतुभवंतः इत्युक्त्वासर्वेधर्मविविक्तारोगोप्तारः सकलाद्विजाः ॥ ममदेहस्यसंशुद्धिंकुर्वंतुद्विजसत्तमाः ॥ मयाकृतंमहाघोरंज्ञातमज्ञातकिल्बिषं ॥ प्रसादः क्रियतांमह्यंशुभानुज्ञांप्रयच्छत ॥ पूज्यैः कृतः पवित्रोहंभवेयंद्विजसत्तमैरितिपठेच्छृणुयाद्वा ॥ निष्कस्तुचतुःसुवर्णः ॥ पुत्रादिस्त्वस्येत्यादि वदेत् ॥ ततः सभ्यास्तस्यशक्त्यनुसारेणप्रायश्चित्तम-



नुवादकाग्रेवदेयुः तदाशोध्योगंधादिनापुस्तकस्यसभ्यानामनुवादकस्यचपूजांकृत्वातस्मैदक्षिणांपापानुसारेण दद्यात् ॥ गोमूल्यंनिबंधपूजात्वेनपुस्तकेनिवेदयेदित्याचारः ॥ ततःसभ्याअमुकप्रायश्चित्तेनपूर्वोत्तरांगयुतेनयथाशक्तिप्रत्याम्नायद्वाराचीर्णेनत्वंशुद्धोभविष्यसीत्यनुवादकाग्रेत्रिर्वदेयुः ॥ शोध्यस्त्वनुग्रहइत्युक्त्वारिक्तायांनद्यादौगत्वाचम्यदेशकालौस्मृत्वाममजन्मप्रभृतीत्यादिनिरासार्थमित्यंतमुक्त्वा सभ्योपदिष्टममुकप्रायश्चित्तंपूर्वोत्तरांगयुतममुकप्रत्याम्नायद्वारायथाकालंकरिष्येइत्युक्त्वा यानिकानिचपापानिब्रह्महत्यासमानिच ॥ केशानाश्रित्यतिष्ठंतितस्मात्केशान्वपाम्यहमितिकक्षोपस्थवर्ज्यंकेशश्मश्रुनखानिवापयित्वायुर्बलमितिदंतधावनं कृत्वातूष्णींस्नात्वाप्रायश्चित्तांगत्वेनभस्मस्नानंकरिष्ये रुद्रायनमइत्युक्त्वाभस्मनास्नात्वैवंगोमयमृद्वारिगोमूत्रगोमयक्षीरदधिसर्पिःकुशोदकैः स्नात्वा धौतंवासःपरिधायतिलकंधृत्वा गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रचेत्यादिगोदानंकृत्वा पापाहविष्णुप्रीत्यर्थंचतुरादियुग्मानामाज्यानिदत्वा पंचगव्यंप्राश्नीयात्नवा आज्यहोमस्तुनशूद्रस्य आज्येनैवहिशालाग्नौजुहुयाद्व्याहृतीः पृथगितिजाबालिनाग्न्याग्निनियमात् ॥ अग्नेःप्रतिनिध्यभावाच ॥ तस्माच्छूद्रंसमासाद्यसदाधर्मपथेस्थितं ॥ प्रायश्चित्तंप्रदातव्यंज-

पहोमविवर्जितमितिपराशरोक्तेश्च ॥ तेनविप्रद्वाराहोमः परास्तः ततस्तद्दिनेउपवासीमौनीनिशामतिवाह्यतीर्थया-
त्राद्वादशमान्नगोदानद्वादशस्नानादिप्रत्याम्नायैःप्रायश्चित्तंकृत्वा यिष्णुश्राद्धांतेगोदानानिप्राग्वत्कृत्वापूर्वोक्तद-
शदानानिदद्यात् दानमंत्रास्तुमत्कृतेदानकमलाकरेज्ञेयाः ततोवैतरणीदानं यथा देशकालौस्मृत्वा ममयमद्वा-
रस्थनद्याःसुखोत्तारणार्थंदिव्यमानुष्यसर्वसुखप्राप्त्यर्थंवैतरणीदानंकरिष्यइत्युक्वा द्रोणप्रमाणकार्पासशिखरोपरि-
ताम्रपात्रेहैमंमहिषारूढंदक्षिणेलोहदंडं वामेपाशंचदधानंयमंसंपूज्य तत्रेक्षुदंडमयींनौकांपट्टसूत्रेणबध्वातत्रस्थां
कृष्णधेनुंसवत्सांस्वर्णशृंगरौप्यखुरकांस्यदोहनकृष्णवस्त्रयुगसप्तधान्यच्छत्रोपानद्युतां संपूज्याधिवास्य परदिने
पात्रंकृत्वासंपूज्यप्राङ्मुख्या घृतदुग्धकुशहेमतिलयुतंपुच्छंगृहीत्वादेशकालौस्मृत्वापूर्वोक्तफलोल्लेखांतेइमांकृ-
ष्णांगांद्रोणप्रमाणकार्पासशिखरहैममयशृंगरौप्यखुरकांस्यदोहनकृष्णवस्त्रयुगसप्तधान्यछत्रोपानदुपस्करयुताम-
शक्तौगामेवामुकगोत्रायतुभ्यमहंसंप्रददे नममेत्युक्त्वामंत्रंपठेत् ॥ यमद्वारेमहाघोरेकष्टांवैतरणींनदीं ॥ तर्तु-
कामोददाम्येतांतुभ्यंवैतरणींचगां ॥ अधिवासनेयं मंत्रइत्येके ॥ विष्णुरूपद्विजश्रेष्ठभूदेवपंक्तिपावन ॥ सद-
क्षिणामयातुभ्यंदत्तावैतरणीचगौः ॥ यमद्वारेमहाघोरेयासावैतरणीनदी ॥ तांतर्तुंगांददाम्येनांतुभ्यंवैतरणीमह-



मितिदत्वादक्षिणांदत्वाधेनुंयमंविप्रंचप्रदक्षिणीकृत्यसर्वंनिवेद्य ॥ धेनुकेत्वंप्रतीक्षस्वयमद्वारेमहाभये ॥ उ-
त्तितीर्षुरहंदेविवैतरण्यैनमोनमइत्यनुगच्छेत् ॥ इतिवैतरणीदानं ॥ दिवोदासीयेऽन्यान्यपिदानान्युक्तानि ॥
यथायथा मोक्षंदेहित्दृषीकेशमोक्षंदेहिजनार्दन ॥ मोक्षधेनुप्रदानेनमुकुंदः प्रीयतांममेतिमोक्षधेनुं ॥ ऐहिकामु-
ष्मिकंयच्चसप्तजन्मार्जितंऋणम् ॥ तत्सर्वंशुद्धिमायातुगामेतांददतोममेतिऋणधेनुं ॥ आजन्मोपार्जितंपा-
पंमनोवाक्कायकर्मभिः ॥ तत्सर्वंनाशमायातुगोप्रदानेनकेशवेतिपापधेनुंदद्यात् ॥ अथदुर्मरणेप्रायश्चित्तं तत्रचांडा-
लादिहतेंतरिक्षमृतेकृच्छ्रातिकृच्छ्रचांद्राणिवा ॥ रजस्वलासूतिकांत्यस्पर्शेम्लेच्छहतेचकृच्छ्राब्दंऊर्ध्वोच्छिष्टाध-
रोच्छिष्टोभयोच्छिष्टचंडालक्रव्यादस्पर्शेखट्वामरणेशवेकृमिकीटोद्भवेत्रीन् षट्पंचदशवाकृच्छ्रांश्चांद्रत्रयंवाकृ-
त्वादहेत् अंत्यजस्पर्शेकृच्छ्राब्दंवा प्रपातेविषेवानवकृच्छ्रान् ॥ शृंगीविप्रशस्त्रचौराद्यैरात्मघातेब्दं शवेपर्युषि-
तेकृच्छ्रत्रयं आशौचमरणेप्येवं मूलंतुमत्कृतेनिर्णयसिंधौज्ञेयं ॥ ततः पुण्यस्तोत्रंरामकृष्णादिनामजपंकुर्यात्कार-
येद्वाततः प्राणोत्क्रमणेजातेपुत्रोवपनंकृत्वास्नात्वानववस्त्रैकदेशंपरिधाय तदेकदेशमुत्तरीयंकृत्वाप्रेतस्यवपनंकृ-
त्वास्नापयित्वावाससाच्छाद्यपुष्पमालाद्यैरलंकुर्यात् मदनरत्नेगालवः प्रथमेहनिकर्तव्यंवपनंचानुभाविनां ॥ प्रेत-

स्यकेशश्मश्र्वादिवापयित्वाथदाहयेत् ॥ मनुः दक्षिणेनमृतंशूद्रंपुरद्वारेणनिर्हरेत् ॥ अत्राक्रियानिबंधे गारुडेषट्पिंडा
उक्ताः मृतस्योत्क्रांतिसमयेषट्पिंडान्क्रमशोददेत् ॥ मृतिस्थानेतथाद्वारिचत्वरेतार्क्ष्यकारणात् ॥ विश्रामेकाष्ठ-
चयनेतथासंचयनेचषट्च ॥ तथा आदौदेयास्तुषट्पिंडादशपिंडादशाहिकाः ॥ स्थानेचार्द्धपथेतीतेचितायांश-
वहस्तके ॥ श्मशानवासिभूतेभ्यः षष्ठंसंचयनेतथा ॥ छंदोगपरिशिष्टे दुर्बलंस्नापयित्वातुशुद्धचैलाभिसंभृतं ॥
दक्षिणाशिरसंभूमौबर्हिष्मत्यांनिधापयेत् ॥ घृतेनाभ्यक्तमाप्लाव्यशुद्धवस्त्रोपवीतिना ॥ चंदनोक्षितसर्वांगेसुमनो-
भिर्विभूषयेत् ॥ हिरण्यशकलान्यस्यक्षिप्त्वाछिद्रेषुसप्तसु ॥ मुखेत्वथापिधायैनंनिर्हरेयुःसुतादयः ॥ सप्तछिद्राणि-
तत्रैव कर्णेनेत्रेमुखेघ्राणेहिरण्यशकलंन्यसेदित्यन्यत्रोक्तं ॥ आमपात्रेन्नमादायप्रेतमग्निपुरः सरं ॥ एकोनुगच्छे-
त्तस्यार्द्धमर्द्धपथ्युत्सृजेद्भुवि ॥ऊर्ध्वमादहनंकार्यमासीनोदक्षिणामुखः॥ सव्यजान्वाच्यशनकैः सतिलंपिंडदानव-
त्॥अथपुत्रादिराप्लुत्यकुर्याद्दारुचयंमहत् ॥ तत्रोत्तानंनिपात्यैनंदक्षिणाशिरसंमुखे॥ एतदग्नेः पात्रन्यासोक्तेरुत्तान-
त्वंसाग्निपरं ॥ शूद्रः पुमानधोमुखः स्त्रीतूत्तानादाह्या तदुक्तंशुद्धितत्त्वेहारलतायांचादिपुराणे स्वगोत्रजैर्गृहीत्वातु
चितामारोप्यते शवः॥ अधोमुखोदक्षिणादिक्चरणस्तुपुमानपि॥उत्तानदेहानारीतुसपिंडैरपिबंधुभिरिति इदमन्यै-



र्ब्राह्ममुक्तंइदंनिरग्निद्विजपरमपीतिगौडाः स्मृतिकौमुद्यांमदनपालस्तु ॥ सदग्धव्यउपेतश्चेदाहिताग्न्यावृतार्थवदि-
तिनिरग्नेरप्याहिताग्निवद्दाहोक्तेस्तस्यचकात्यायनेनतत्रोत्तानंनिपात्यैनं दक्षिणाशिरसंमुखेइत्युत्तानत्वोक्तेर्निरग्नेर-
पितदेवेत्याहतत्त्वतिदेशेनकथमुपदेशस्यबाधइतिचिंत्यं ॥ केचित्तुवाचनिकातिदेशस्योपदेशतुल्यत्वादुपेतश्चेदि-
त्यस्यद्विजपरत्वाद्ब्राह्मेतुतत्पदाभावाच्छूद्रपरमेवेतिनद्विजानामुत्तानत्वमेवेत्याहुः ॥ अन्येतुछंदोगद्विजानामुत्ता-
नत्वमन्येषामधोमुखत्वमित्याहुः ॥ आस्तांनिरग्निद्विजवार्ता ॥ अनुपनीतद्विजशूद्राणांत्वधोमुखत्वमुदकशिर-
स्त्वंचेत्यविवादं दाहस्तुशूद्रस्यामंत्रकः निषेकादिः श्मशानांतोमंत्रैर्यस्योदितोविधिरितिमदनपालः तत्त्वंतु वैदि-
कस्यैवनिषेधः पौराणस्तुभवत्येव सचप्रयोगेवक्ष्यते अतएवत्राराहे चतुर्वर्णेषुसंस्थानमेवंभवतिपुत्रिके इत्युक्त
प्रचेताः नग्नदेहंदहेन्नैवकिंचिद्देयंपरित्यजेत् ॥ यमः प्रेतंदहेच्छुभैर्गंधैः स्नापितंस्रग्विभूषितं ॥ क्रियानिबंधेगारु-
डे उदधारामविच्छिन्नांसिंचेत्कर्ताप्रदक्षिणं ॥ स्कंधावसक्तकुंभेनपादतः परिताश्चितेः ॥ दंपत्योरेकदामृतौतुबौधा-
यनः दाहांतमेकतंत्रत्वं संचयनंचैकं उदकपिंडदानादिपृथगेव अन्वारोहणंचैवं उदकदानंब्राह्मे आदौतुवस्त्रं
प्रक्षाल्यतेनैवाच्छादितैस्ततः ॥ कर्तव्यंतैः सचैलंतुस्नानंसर्वमलापहं ॥ ततः पाषाणपृष्ठेतुसर्वैर्देयंतिलोदकं ॥ त्रिंश-

च्छूद्रायदेयास्तुप्रेतभूमिगतायच ॥ विशेषोनिर्णयसिंधौज्ञेयः॥ अथप्रयोगः॥ पुत्रादिरपसव्येन देशकालौस्मृत्वा
काश्यपगोत्रस्यास्म त्पितुरमुकदासप्रेतस्यप्रेतत्व निवृत्त्याउत्तमलोकप्राप्त्यर्थमौर्ध्वदै हिकंकरिष्यइत्युक्त्वामृति-
स्थानेदर्भेकाश्यपगोत्रामुकदासप्रेतेदंतेऽवनेजनं एषतेपिंडः प्रत्यवनेजनंचएवंउत्थापनापिंडंदत्वाप्रेतवस्त्रेपिंडं
बध्वादक्षिणद्वारानयेत् द्वारेचतुष्पथेविश्रांतौचितायांचैवंदेयाः ततः शुचिदेशेपंचभूसंस्कृतेक्रव्यादसंज्ञकाग्निं
प्रज्वाल्यगंधमाल्यैः संपूज्यप्रेतस्यवपनंकारयित्वागंधमाल्यैरलंकृत्यमुखसप्तछिद्रेषुहेमशकलान्यभावेआज्यंवा
क्षिप्त्वानववस्त्रवेष्टितंघृताक्तंकृत्वाचितौउत्तरशीर्षमधोमुखंपुरुषमुत्तानांस्त्रियंनिनाय ॥ असौसंस्कार्यलोकाय
स्वाहेतितूष्णींवाज्याहुतिंदत्वाशिरस्थानेग्निंदद्यात् ॥ मंत्रस्तुवाराहे कृत्वातुदुष्कृतंकर्मजानतावाप्यजानता ॥
मृत्युकालवशंप्राप्यनरंपंचत्वमागतं ॥ धर्माधर्मसमायुक्तंलोभमोहसमावृतं ॥ दहेयंसर्वगात्राणिदिव्यान्लोका-
न्सगच्छतु ॥ ज्वलमानंमहावन्हिंशिरस्थानेप्रदापयेत् ॥ चतुर्वर्णेषुसंस्थानमेवंभवतिपुत्रिके ॥ चतुर्वर्णोक्तिर-
नुपनीताद्विजपरा क्रियानिबंधेगारुडेत्वन्योमंत्र उक्तः त्वंभूतकृज्जगद्योनेत्वंलोकपरिपालकः॥ उक्तः संहारक-
स्तस्मादेनंस्वर्गंमृतंनयेति ॥ ततः किंचिच्छवेदग्धेसकुंभमादायपादतोप्रदक्षिणं त्रिःपरिक्रम्यात्रिरश्मनाकुंभं



भित्त्वाकुंभंक्षिप्त्वानवेक्षमाणाः बालपुरःसराजलंगत्वापूर्वधृतंवस्त्रंप्रक्षाल्यपुनः परिधायवामनासिकया जलमा-
लोड्यवृद्धाद्याः स्नात्वातीरेदर्भेपाषाणंनिधायऋजुदर्भेतिलपूर्णांजलिंकाश्यपगोत्रअमुकदासप्रेतएषतेतिलांजलि-
रुपतिष्ठतु ॥ उपतिष्ठतामितिवासर्वेदक्षिणामुखाःसकृत्त्रिर्वादत्वापुनःस्नायुः मित्रोढानूढकन्याभागिनेयश्वश्रूश्वशु-
रमातामहतत्स्त्रीमातुलराज्ञामुदकदानंकृताकृतं ॥ क्लीबभर्तृगर्भस्त्रीपतितैरुदकंनकार्यंतेभ्योप्यन्यैः एवंत्रिंशत्पंच-
दशदशवादिनानिप्रत्यहंदद्यात् प्रत्यहमेकवृद्धिर्द्विकवृद्धिस्त्रिकवृद्धिर्वाकार्या ततोबालपुरःसराजलादुत्तीर्याधोदशं
वस्त्रंनिष्पीड्यगृहद्वारिस्थित्वा त्रीणिनिंबपत्राणि विदश्याचम्यगोमयसर्षपवृषांबुदूर्वाग्नीनालभ्याश्मनिपदंनि-
धायगृहंप्रविशेयुः वृद्धाः शोकापनोदनंकुर्युः ततोमृन्मयेपात्रद्वयेएकाहंत्र्यहंवाप्रेतात्रस्नाहीतिजलंपिबेदमिति
क्षीरंविदध्यात् दशरात्रमितिहेमाद्रौ ॥ प्रत्यहंभूमौकर्ताभोजनसमयेऽन्नंसंकल्पयेत् ॥ ततस्त्र्यहमुपवासःक्री-
तलब्धाशनंवा अधः शय्यासनंसर्वेषायांवदाशौचं प्रथमद्वितीयतृतीयसप्तमदशमेषुवाज्ञातिनासहभोजनं तच्च
दिवैव बहिः प्रेतायदीपोदेयइत्यादिनिर्णयसिंधौज्ञेयं अथसंचयनं तच्च प्रथमद्वितीयतृतीयचतुर्थसप्तमनवमेषु शू-
द्राणांविशेषतोदशमेह्नि तदुत्तरंतु भौमार्कमंदतिथियुग्मैकपादद्विपादत्रिपादकर्तृनक्षत्रवर्ज्यदिनेकार्यं कर्तादेका-

लौस्मृत्वास्मत्पितुः काश्यपगोत्रस्यामुकदासप्रेतस्यप्रेतत्वनिवृत्याउत्तमलोकप्राप्त्यर्थमस्थिसंचयनश्राद्धंकरिष्ये-
इत्युक्त्वाकुशबटुंनिधाय इहलोकंपरित्यज्यगतोसिपरमांगतिं मनसावायुरूपेणविप्रेत्वाहंनियोजये ॥ अमुकप्रेते-
दंतआसनमुपतिष्ठतां एवमर्घः गंधपुष्पधूपदीपआच्छादनंउपतिष्ठतां एवंक्रव्याददेवताभ्यः प्रेतायतत्सखिभ्य-
श्चत्रीण्यामान्नानिदत्वाघृतक्षीरोदकैश्चितिंप्रोक्ष्यपलाशशाखया चितेर्भस्मापोह्यांगुष्ठकनिष्ठिकाभ्यांशिरसउरसः
पाण्योः पार्श्वयोः - पादयोरस्थीन्यादायपंचगव्येनगंगोदकेनप्रक्षाल्यगंधाद्यर्चितानिक्षौमेणावेष्ट्यनवकुंभेनिधाय
शरावेणपिधायवनेवृक्षमूलेवाभूमौनिखायभस्मनद्यांक्षिप्त्वाचितिदेशेवेदिंकृत्वा तत्रावकाशमीपत्रच्छत्रपताकायुतं
कुंभत्रयंसंस्थाप्यक्रव्याददेवताभ्यः प्रेतायतत्सखिभ्यश्चनिवेद्यकुंभेषुपिंडान्दद्यात् मंत्रस्तु नमः क्रव्यादमुख्येभ्पो
देवेभ्यइहसर्वदा ॥ श्मशानवासिनोदेवाः शवानांपरिकीर्तिताः ॥ तेभ्योन्नमुदकंकुंभमक्षय्यमुपतिष्ठतुयेत्रश्मशाने
देवाःस्युर्भगवंतःसनातनाः ॥ तेस्मत्सकाशाद्गृण्हंतुबलिमष्टांगमक्षयं ॥ प्रेतस्यास्यशुभान्लोकान्प्रयच्छंतुचशाश्व-
तान्॥अस्माकमायुरारोग्यंसुखंचददताच्चिरं॥इतिप्रथमंश्मशानवासिभ्योमध्यमं प्रेतायतद्दक्षिणेतत्सखिभ्यश्चदत्वा



१ दूरीकृत्य

स्नायात्शिष्टान्यस्थीनिगंगायांक्षिपेत् तद्विधिस्तुहेमश्राद्धंतर्पणंचकृत्वास्थीनिपंचगव्येनप्रक्षाल्यहेममुक्तारूप्यप्र-
वालकान्यस्थिमध्येक्षिप्त्वातीर्थंगत्वास्नात्वापंचगव्येनप्रोक्ष्यहिरण्यमध्वाज्यतिलैःसंयोज्यमृत्पिंडेनिधायदक्षिणा -
मुखोनमोस्तुधर्मायेतिजलंप्रविश्यसमेप्रीतोस्त्विइतिक्षिप्त्वाविप्रेभ्योदक्षिणांदत्वापुनः श्राद्धतर्पणंचकुर्यात् अत्रदश-
दानगोदानादिकुर्वंति इदमधिमासशुक्रास्तादौनकार्यंदशाहमध्येतुनदोषः ॥ अथपाथेयश्राद्धं काश्यपगोत्रस्या-
मुकदासप्रेतस्यमनुष्यलोकात्प्रेतलोकंगच्छतः पाथेयसिध्यर्थंपाथेयश्राद्धंकरिष्येइत्युक्त्वाकुशबटौ इहलोकंपरि-
त्यज्येतिप्रागुक्तमंत्रांतेइदंतेआसनमुपतिष्ठतां एवमर्घोगंधःपुष्पंधूपोदीपआच्छादनमामान्नंचोपतिष्ठतामितिसर्वत्र
वदेत् ॥ ततःइदंतेपिंडासनं अवनेजनंपिंडः प्रत्यवनेजनं पिंडपूजादक्षिणाच ॥ अयमेवसर्वप्रेतश्राद्धानांप्रयोगः
एवंनग्नप्रच्छादनंश्राद्धंकुर्यात् अत्रवस्त्रदानं ॥ अथनवश्राद्धं तच्चविषमदिनेषुप्रथमतृतीयपंचमसप्तमनवमैकाद-
शेषुकार्यं अमुकप्रेतस्यप्रेतत्वविमुक्त्याउत्तमलोकप्राप्त्यर्थमाद्येन्हिविषमश्राद्धंकरिष्ये अत्रविप्रनिमंत्रणेमंत्रोवारा-
हे गतोसिदिव्यलोकंत्वंकृतांतविहितात्पथः ॥ मनसावायुभूतेनविप्रेत्वाहंनियोजये ॥ पूजयिष्यामिभोगैस्त्वामे-
वंविप्रंनिमंत्रयेत् ॥ अन्यत्प्राग्वत् भविष्ये नवसप्तविंशांराज्ञांनवश्राद्धान्यनुक्रमात् ॥ आद्यंतयो-

र्वर्णयोस्तुषडित्याहुर्महर्षयः ॥ अथप्रेतपिंडाः तेचामान्नेनैवेतिहलायुधः चरुणेत्यन्ये यद्यपिहेमाद्रौपारस्करेण
शूद्रेत्रिंशत्प्रकीर्तिताइत्युक्तं तथापिप्रेतेभ्यः सर्ववर्णेभ्यःपिंडान्दद्याद्दशैवचैतितेनैवोक्तेर्दशैव अन्येतु याव-
दाशौचंप्रेतस्योदकंपिंडंचदद्युरितिविष्णूक्तेस्त्रिंशाद्विंशाद्विंशातिपंचदशरात्रपक्षेषुतत्संख्ययापिंडाइत्याहुः हेमाद्रौब्रा-
ह्मेतुविप्रान्येषुदशपिंडपक्षेत्यापिंडोत्कर्षउक्तः ॥ देयस्तुदशमः पिंडोराज्ञांवैद्वादशेहनि ॥ वैश्यानांवैपंचदशेमासे
शूद्रेषुदीयते ॥ सद्यः शौचंत्र्यहादौतुतत्रैवहि ॥ सद्यः शौचेप्रदातव्याः सर्वेपियुगपत्तथा ॥ त्र्यहाशौचेप्रदात-
व्याः प्रथमेह्न्येकएवहि ॥ द्वितीयेहनिचत्वारस्तृतीयेपंचचैवहि ॥ शातातपः ॥ आशौचस्यचन्हासेपिपिंडान्द-
द्याद्दशैवतु ॥ आशौचोत्तरंदाहेपर्णशरेचाशौचन्हासः ॥ अत्रदेशकर्तृद्रव्यैक्यंज्ञेयं ॥ प्रथमेहनियद्द्रव्यंतदेवस्या-
द्दशाहिकं ॥ यत्राद्येदीयतेपिंडस्तत्रसर्वंसमापयेदितिक्रियानिबंधेव्यासोक्तेः ॥ ब्राह्मे ॥ प्रथमेहनियोदद्यात्प्रेताया-
न्नंसमाहितः ॥ अन्नंनवसुचान्येषुसएवप्रददात्यपि ॥ दाहकर्तैवदशाहंकुर्यादितिमिताक्षरायां ॥ शुद्धितत्त्वेत्राय-
वीयेपि असगोत्रःसगोत्रोवायदिस्त्रीयदिवापुमान् ॥ यश्चाग्निदाताप्रेतस्यपिंडंदद्यात्सएवहि ॥ कर्तृमृतौतुतत्रैव
बृहस्पतिः ॥ एवंक्रियाप्रवृत्तानांयदिकश्चिद्विपद्यते ॥ तद्बंधुनाक्रियाकार्यासर्वैर्वासहकारिभिः ॥ अन्येनशेषः

कार्यइतिगौडाः ॥ आदितः सर्वमित्यन्ये ॥ आदिपुराणे उपतिष्ठतामयंपिंडः प्रेतायेतिसमुच्चरेदिति ॥ अथप्रयो-
गः ॥ ऐशान्यांवेदिंकृत्वातैजसेमृन्मयेवाचरुंश्रपयित्वासक्तुनावातिलमधुघृतयुतंकपित्थमात्रंपिंडंकृत्वा तिथ्याद्यु-
क्त्वा काश्यपगोत्रस्यामुकप्रेतस्यमूर्धाक्षिदंतावयवसंभूत्यैप्रथमाह्निकदेहपूरकपिंडदानंचकरिष्ये द्वितीयादौद्वौद्वि-
तीयाहादिकेत्यादि ॥ ततः पाषाणाग्रेविष्णुंसंपूज्यदर्भासनमवनेजनंचकृत्वामुकप्रेतेत्यादिमूर्धावयवसंभूत्यैदेहपू-
रकःप्रथमाह्निकएषतेपिंडउपतिष्ठतां प्रत्यवनेजनं भृंगराजतुलसीदलानि पिंडंजलेक्षिपेत् ॥ अंजलिदानंतूक्त-
मेव ॥ एवंदशाहं ॥ तत्रसंकल्पेविशेषः ॥ चक्षुःश्रोत्रनासामुखावयवनिष्पत्त्यर्थमितिद्वितीये ॥ गलांसभुजवक्षो-
निष्पत्त्यर्थमितितृतीयेविषमश्राद्धंच॥नाभिलिंगगुदनिष्पत्त्यर्थमितिचतुर्थे ॥जानुजंघापादावयवसिद्ध्यर्थमितिपंच-
मे विषमश्राद्धंच ॥ सर्वमर्मावयवनिष्पत्त्यर्थमितिषष्ठे ॥ मज्जामेदोमांसस्नायुनाडीरूपावयवसंभूत्यैइतिसप्तमे वि-
षमश्राद्धंच॥दंतलोमनखावयवसिद्ध्यर्थमित्यष्टमे॥ वीर्यावयवसिद्ध्यर्थमितिनवमे विषमश्राद्धंच ॥ देहपूर्णत्वतृ-
प्तताक्षुद्विपर्ययसिद्ध्यर्थमितिदशमे ॥ प्रत्यहमंजलिसंख्ययोदकुंभाश्चदेयाः ॥ अत्यशक्तौतुपिंडयज्ञावृतादेयंप्रेता-
यान्नंदिनत्रयमितिज्ञेयं ॥ अपरार्केव्यासः ॥ आशौचांत्यदिनेक्षौरंजनन्यांचगुरौमृते ॥ आपस्तंबः ॥ अनु-

भाविनांचपरिवापनं ॥ अनुभाविनः कनिष्ठाइतिमिताक्षरारत्नाकरादयः आशौचमनुभवतांसर्वेषांवपनमितिशु-
द्धितत्त्वादयोगौडाः ॥ तदुक्तंरत्नमालायां ॥ आज्ञयानरपतेर्द्विजन्मनांदारकर्मम्रतसूतकेषुच ॥ बंधमोक्षमखदी-
क्षणेष्वपिक्षौरमिष्टमखिलेषु चोडुषु ॥अपरार्केव्यासः ॥ पुत्रःपत्नीचवपनंकुर्यादंतेयथाविधि॥पिंडदानोचितोन्योपि
कुर्यादित्थंसमाहितः ॥ पुत्राणामाद्यंतयोः समुच्चयश्चज्ञेयः दशदिनेत्ववयवपिंडंदत्वात्रिकोणांवेदींकृत्वाप्रेतसखि-
भ्यः प्रेताययमायचपिंडत्रयंदत्वा अपूपध्वजच्छत्रोदकुंभान्निवेद्यकाकबलिंदत्वाअश्मानंतैलेनाभ्यज्यजलेक्षिप्त्वा
प्रेतस्पृष्टवाससीत्यक्त्वापुत्रः पत्नीसर्वेप्रेताल्पवयसश्चवपनंकुर्युः॥ततः स्नात्वासर्वेत्रिर्धर्मोदकांजलिंदत्वासर्षपक-
ल्केनतिलामलकैर्वास्नात्वा गृहंव्रजेयुः दशाहमध्येदर्शेतुमाधवीयेऋष्यशृंगः ॥आशौचमंतरादर्शोयदिस्यात्सर्वव-
र्णिनां ॥ समाप्तिंप्रेततंत्रस्यकुर्यादित्याहगौतमः॥श्लोकगौतमः॥ अंतर्दशाहेदर्शश्चेत्तत्रसर्वंसमापयेत॥पित्रोस्तुयाव-
दाशौचंदद्यात्पिंडाञ्जलांजलीन् ॥ इदमपित्र्यहमध्येदर्शेतदूर्ध्वंदर्शेतुपित्रोरपितंत्रंसमाप्यमेव ॥ पित्रोराशौचम-
ध्येतुयदिदर्शःसमापतेत् ॥ तावदेवोत्तरंतंत्रंपर्यवस्येत्त्र्यहात्परमितिगालवोक्तेः ॥ अन्येषांतुत्र्यहमध्येपिसमाप्यं ॥
कालाम्रतेनिर्णयाम्रतेचैवं ॥ मदनरत्नपारिजातयोस्तुगालवीयमापदनौरसपत्रादिपरं ॥ पित्रोस्त्र्यहोर्ध्वमपिना-



पकर्षइत्युक्तंतन्नमूलंचिंत्यं ॥ इतिश्रीकमलाकरभट्टकृतेशूद्रधर्मेशूद्राशौचंतत्कृत्यंच ॥ अथैकादशाहः ॥ मनुः ॥
विप्रः शुध्यत्यपः स्पृष्ट्वाक्षत्रियो वाहनायुधे ॥ वैश्यः प्रतोदरश्मीन्वायष्टिंशूद्रः कृताक्रियः ॥ शुद्धितत्त्वेदेवलः ॥
अघाहःसुनिवृत्तेषुसुस्नाताःकृतमंगलाः ॥ आशौचाद्विप्रमुच्यंतेब्राह्मणान्स्वास्तिवाच्यच ॥ इदंसपिंडनोत्तरमि-
तिशिष्टाः ॥ हेमाद्रौशंखः आद्यंश्राद्धमशुद्धोपिकुर्यादेकादशेहनि ॥ कर्तुस्तात्कालिकीशुद्धिरशुद्धः पुनरेवसः ॥
शूद्रे प्येवंतदाहपैठीनसिः ॥ एकादशेन्हियच्छ्राद्धंतत्सामान्यमुदाहृतं ॥ चतुर्णामपिवर्णानांसूतकंतुपृथक्पृथक् ॥
यत्तुमरीचिः आशौचांतेततःसम्यक्पिंडदानंसमाप्यते॥सर्वश्राद्धंप्रदातव्यंसर्ववर्णेष्वयंविधिरिति तत्सर्वेषांदशाह-
परं॥ यतुमात्स्येएकादशेहनितथाविप्रानेकादशैवतु ॥ क्षत्रादिः सूतकांतेतुभोजयेदयुजोद्विजानिति तद्रुद्रगणश्रा-
द्धपरं ॥ रुद्रमुद्दिश्यकर्तव्यंप्रेतप्रीतिकरंहितादितिवचनादितिमदनपारिजातः ॥ कल्पतरौशूलपाणिवाचस्पत्याद-
यस्त्वस्माद्वचनादप्याशौचापगमइतिविष्णूक्तेः प्रागुक्तशंखादिवचनानांचानाकरत्वाच्छूद्रादीनामप्याशौचांत
एवाहुः ॥ अन्येतुद्विविधवाक्यवशाद्देशाचारतोविकल्पमाहुः सत्यव्रतः सद्यः शौचेपिदातव्यंप्रेतस्यैकादशेहनि ॥
उशनाः त्र्यहाशौचेपिकर्तव्यमाद्यमेकादशेहानिइति ॥ अतीतविषयेसद्यस्त्र्यहोर्ध्वंवातादिष्यते ॥ हेमाद्रौबौधाय-

नः एकोद्दिष्टंश्वएवस्याद्वादशेहनि वापुनः॥ अतऊर्ध्वंमयुग्मेषुकुर्वीताद्दःसुशक्तितः ॥ अर्धमासेथवामासित्रहतौ-
संवत्सरेपिवा ॥ अथवृषोत्सर्गः ॥ हेमाद्रौमात्स्येकौर्मे नकरोतिवृषोत्सर्गंसुतीर्थेवाजलांजलिं ॥ नददातिसुतोयस्तु
पितुरुच्चारएवसः॥ एष्टव्याबहवः पुत्रायद्येकोपिगयांव्रजेत् ॥ यजेतवाश्वमेधेननीलंवावृषमुत्सृजेत् ॥ षट्त्रिंशन्मते
पतिपुत्रवतीनारीभर्तुरग्रेमृतायादि ॥ वृषोत्सर्गंनकुर्वीतगांदद्याच्चपयस्विनीं ॥ एकादशेन्हिप्रेतस्ययस्यनोत्सृज्य-
तेवृषः ॥ प्रेतत्त्वंसुस्थिरंतस्यदत्तैः श्राद्धशतैरपि ॥यत्तुहेमाद्रौभविष्ये चैत्र्यांवापितृतीयायांवैशाख्यांद्वादशेन्हिवा॥
यच्चविष्णुधर्मेविषुवद्दितयेचैवमृताहेवांधवस्यचेतितत्पूर्वासंभवेज्ञेयं ॥ ब्राह्मे लोहितोयस्तुवर्णेनमुखेपुच्छेचपांडु-
रः॥ श्वेतः खुरविषाणाभ्यांसनीलोवृषउच्यते॥ देवीपुराणे चतस्रोवत्सिकाभद्रेद्देह्यसंभवतोपिवा ॥ अथप्रयोगः त-
त्रपूर्वंविष्णुरूपिणेतर्पणमुक्तंदेवजानीये तत्रमूलंचिंत्यं ॥ उपवीतीदेशकालौस्मृत्वा ॥ काश्यपगोत्रस्यामुकदासप्रे-
तस्यप्रेतत्वनिवृत्यारुद्रलोकप्राप्त्यर्थंवस्त्रादिलोकप्राप्त्यर्थंवावृषोत्सर्गंकरिष्येइत्युक्त्वा नंदाहिसुमनाश्चैवसुशीला
चपयस्विनी॥ सुरभिः पंचमीप्रोक्तेतिवृषमातृः पूजयेत्ततस्ततऐशानेकुंभेरुद्रंसंपूज्याग्निंप्रतिष्ठाप्यब्रह्मासनंकृत्वाप्र-
णीतापात्रेद्वयोर्भागयोर्जलक्षीरेप्रणीयपायसंपिष्टचरुंचकृत्वा ॥ आदौ इहरतिः षट्चआज्यभागांततः परामि-



तिस्मृतेरग्नयेस्वाहेतिषट् ततआघारावाज्यभागौच ततः प्रजापतये इंद्रायाग्नये सोमायचाज्यंहुत्वाग्नयेरुद्रा-
यशर्वायपशुपतयेउग्रायाशनयेभगायमहादेवायेशानायचपायसं हुत्वापूष्णेस्वाहेतिपिष्टंचरुंहुत्वा द्वयोः स्विष्ट-
कृतंहुत्वाज्येनप्राजापत्यंतानवाहुतीर्हुत्वावृषंचतस्रोद्वेएकांवावत्सतरीमलंकुर्यात् अत्रहोमस्यवेदमंत्रैरुक्तेः शूद्र-
स्यहोमोनेतिमदनपालः अन्येतुनाम्नाहुः ततोवृषमग्निंचतुः परिक्रम्यरुद्रकुंभोदकेनाभिषिच्यवृषंगाश्चगंधस्र-
ग्वस्त्राद्यैरलंकृत्यरुद्ररूपविप्रायैतत्पाद्यमासनंगंधंचचतुर्भ्योदत्वारुद्ररूपप्रेतरूपिविप्रेभ्यश्चत्वार्यामान्नानिदत्वावृ -
षोत्सर्गश्राद्धप्रतिष्ठार्थंदक्षिणांदत्वावृषपदेपिंडान्दद्यादितिकेचित् ॥ ततोवामांगेत्रिशूलेनदक्षिणेचक्रेणव्यत्यये-
नवा वृषंगाश्चांकयित्वाकुशातिलहेमजलयुतंपुच्छमादायदेशकालावुक्त्वा काश्यपगोत्रस्यास्मत्पितुरमुकप्रेत-
त्वविमुक्तिद्वारारुद्रलोकप्राप्त्यर्थंइमंवृषंवत्सतरीसहितंरुद्रदैवतममुकगोत्रायामुकप्रेतायोत्सृजामि युष्मभ्यंपतिं
ददाम्येतेनपतिनास्वछंदंचरततेनश्रीरुद्रः प्रीयतामित्युक्त्वापसव्येनसतिलंपुच्छोदकमादायामुकप्रेतइदंतेवृषव-
त्सतर्योः पुच्छोदकमुपतिष्ठतामित्युक्त्वापठेत् ॥ धर्मत्वंवृषरूपेणजगदानंदकारक ॥ अष्टमूर्तेरधिष्ठानमतः
पाहिसनातन ॥ वृषोहिभगवान्धर्मश्चतुष्पादः प्रकीर्तितः ॥ वृणोमितमहंभक्त्याप्रेतंस्वर्गंनयत्वसौ ॥ अयंहि

त्रोमयादत्तः सर्वासांपत्तिरुत्तमः ॥ तुभ्यंचैतामयादत्ताः पत्न्यः सर्वामनोरमाः ॥ वृषएषमयादत्तस्तंतारयतुसर्वे-
दा ॥ ब्रह्मणेपूर्णपात्रमाचार्यायसहिरण्यंगोमिथुनंदत्वाविसृज्येश्वरार्पणंकुर्यात् ॥ इतिवृषोत्सर्गः ॥ ततोनवश्रा-
द्धवद्धरध्रुवाद्यष्टवसूद्देशेनाष्टावेकंवाविप्रमित्येवंवसुश्राद्धमेकादशभ्य एकस्मैवारुद्रगणश्राद्धंचकृत्वाचम्यदेशका-
लौस्मृत्वा काश्यपगोत्रस्यास्मत्पितुरमुकप्रेतस्यप्रेतत्वनिवृत्यावस्वादिरूपप्राप्त्यर्थमाद्यंश्राद्धमेकादशेन्ह्येकोद्दिष्ट-
विधिनाकरिष्येइत्युक्त्वाद्यश्राद्धेमुकप्रेतस्थानेक्षणः कर्तव्यः तथा प्राप्नोतुभवान्प्राप्नवानि इत्येकादशैकंवाविप्रं
निमंत्र्याक्रोधनैः शौचपरैःइत्युक्त्वादर्भबटुंवानिमंत्र्यसर्वंनवश्राद्धंतुपार्वणवच्चकार्यं ॥ तत्रद्वारिवृत्तंमंडलंकृत्वा-
चम्याभ्यर्च्यामुकप्रेतैतत्तेपाद्यमुपातिष्ठतामित्येवंपाद्यंदत्वाचम्योदङ्मुखमुपवेश्यामुकप्रेतामुकगोत्रैषतेगंधः पुष्पा-
णिधूपोदीपआच्छादनंछत्रालंकारादिवोपतिष्ठतां संपूर्णतांवाचयित्वाग्नौकरणंनेतिबह्वः गृह्यभाष्यमतेत्वस्ति ॥
तदामुकप्रेतायस्वाहेत्यामेनैकाहुतिः ॥ ततः सोदकुंभमामान्नंसोपस्करममुकप्रेतायाद्यश्राद्धेउपतिष्ठतां ॥ वि-
किरेविकल्पः ॥ ततोवेद्यांरेखांकृत्वाउच्छिष्टपिंडेचइदंपिंडासनं अवनेजनं अयंपिंडः प्रत्यवनेजनं पिंडपूजासू-
त्रंच ॥ ततः सुप्रोक्षितादिकृत्वागोत्रंनोवर्द्धतामित्युक्त्वाक्षय्योदकंदत्वादक्षिणांदत्वैकादशपक्षे आद्यायप्रेतालं-



कारवाहनादिदद्यात् ॥ बृहस्पतिः ॥ प्रेतालंकारवस्त्रादिपितुर्यद्वाहनादिकं ॥ संपूज्यगंधमाल्यैस्तुश्राद्धभोक्रेत-
दर्पयेत् ॥ ततोभिरम्यतामितिविसर्जयेत् ॥ शेषंनवश्राद्धवत् ॥ ततआद्यमासिकंकुर्यात् ॥ तत्समानतंत्राणि
षोडशश्राद्धानिवा ॥ आद्याब्दिकमपीत्येके ॥ अत्रपददानमुक्तंदेवजानीयेगारुडेएकादशाहंप्रक्रम्य तदन्हिदी-
यतेसर्वंद्वादशाहेविशेषतः ॥ पदानिसर्ववस्तूनिवरिष्ठानित्रयोदश ॥ योददातिमृतस्येहजीवन्नप्यात्महेतवे ॥
सुखीभूत्वामहामार्गेवैनतेयसगच्छति ॥ आसनोपानहौछत्रंमुद्रिकाचकमंडलुः ॥ भोजनंभाजनाधारोवस्त्रा-
ण्यष्टविधंपदं ॥ तथा ॥ भाजनासनदानेनमुद्रिकाभोजनेनच ॥ आज्ययज्ञोपवीतेनपदंसंपूर्णतांव्रजेत् ॥ म-
हिषीरथगोदानात्सुखीभवतिनिश्चितं ॥ सर्वोपस्करयुक्तानिपदान्यत्रत्रयोदश ॥ योददातिमृतस्ये-
हजीवन्नप्यात्महेतवे ॥ सगच्छतिपरंस्थानंमहाकष्टविवर्जितः ॥ त्रयोदशपदानीत्थंप्रेतायैकादशेहनि ॥
दातव्यानियथाशक्तितेनासौप्रीणितोभवेत् ॥ अन्नंचैवोदकंचैवोपानहौचैकमंडलुः ॥ छत्रंवस्त्रंतथायष्टिं
लोहदंडंतथाष्टमं ॥ अग्नीष्टकांचदीपंचतिलांस्तांबूलमेवच ॥ चंदनंपुष्पदानंचोपदानानिचतुर्दश ॥ यो-
श्वंरथंगजंवापिब्राह्मणेप्रतिपादयेत् ॥ स्वमहिम्नोनुसारेणतत्तत्सुखमवाप्नुयात् ॥ अत्रतत्तद्दानमंत्रामत्कृतेदानक-

मलाकरेज्ञेयाः ॥ अत्रमूलंतुचिंत्यं ॥ अथशय्यादानं हेमाद्रौभविष्ये ॥ तस्माच्छय्यांसमासाद्यसारदारुमयींदृढां ॥
दंतपत्रचितांरम्यांहेमपट्टैरलंकृतां॥ हंसतूलीप्रतिच्छन्नांशुभगंडोपधानिकां॥प्रच्छादनपटीयुक्तांगंधधूपाधिवासि-
तां ॥ तस्यांसंस्थापयेद्धैमंहरिंलक्ष्म्यासमन्वितं ॥ अत्रहरिस्थानेप्रेतं ॥ उच्छीर्षकेघृतभृतंकलशंपरिकल्पयेत् ॥
विज्ञेयःपांडवश्रेष्ठसनिद्राकलशोबुधैः ॥ तांबूलंकुंकुमक्षोदकर्पूरागरुचंदनं ॥ दीपिकोपानहच्छत्रचामरासनभाज-
नं ॥ पार्श्वेषुस्थापयेद्भक्त्यासप्तधान्यानिचैवहि ॥शयनस्थस्यभवतियदन्यदुपकारकम् ॥भृंगारकरकाद्यंतुपंचवर्ण-
वितानकं ॥ मंत्रस्तु ॥ यथानकृष्णशयनंशून्यंसागरजातया ॥शय्याममाप्यशून्यास्तुतथाजन्मनिजन्मनि ॥ यस्मा-
दशून्यंशयनंकेशवस्यशिवस्यच ॥ अर्द्धंतदेव॥दत्वेवंतस्य सकलंप्रणिपत्यविसर्जयेत् ॥एकादशाहेपितथाविधिरेष
प्रकीर्तितः ॥ विशेषंचात्रराजेंद्रकथ्यमानंनिशामय ॥ तेनोपभुक्तंयत्किंचिद्वस्त्रवाहनभाजनं ॥ यद्यदिष्टंचतस्या-
सीत्तत्सर्वंपरिकल्पयेत् ॥ तमेवपुरुषंहैमंतस्यांसंस्थापयेत्सदा ॥ पूजयित्वाप्रदातव्यामृतशय्यायथोदिता ॥ तत्रैव
पाद्मे ॥ मृतकांतेद्वितीयेह्निशय्यांदद्यात्सलक्षणां ॥ कांचनंपुरुषंतद्वत्फलंवस्त्रसमन्वितम् ॥ संपूज्यद्विजदांपत्यंना-
नाभरणभूषितं ॥ उपवेश्यतुशय्यायांमधुपर्कंततोवदेत् ॥ रजतस्यतुपात्रेणदधिदुग्धसमन्वितं ॥ अस्थिलालाटिकं

गृह्यसूक्ष्मंकृत्वातुपायसं ॥ भोजयेद्द्विजदांपत्यंविधिरेषसनातनः ॥ एषएवविधिर्दृष्टः पार्वतीयैर्द्विजोत्तमैः ॥ एत-
त्प्रतिग्रहेतत्रैव ॥ गृहीतायांतुतस्यांवैपुनःसंस्कारमर्हति ॥ भविष्ये स्वर्गेपुरंदरपुरेसूर्यपुत्रालयेतथा ॥ सुखंव-
सत्यसौजंतुःशय्यादानप्रभावतः ॥आभूतसंप्लवंयावत्तिष्ठत्यातंकवर्जितः॥ इतिशय्यादानं ॥ क्रियानिबंधेस्मृत्यंतरे
सूतकेमृतकेचैवद्वितीयंमृतकं यदि ॥ पिंडदानंप्रकुर्वीतवृषोत्सर्गंतथैवच ॥ नहन्यात्सूतकंकर्मद्वादशैकादशा-
हिकं ॥ शुद्धोवायदिवाशुद्धःकुर्यादेवाविचारयन् ॥ अथोदकुंभः॥ हेमाद्रौस्मृतिसमुच्चयेएकादशाहात्प्रभृतिघट-
स्तोयान्नसंयुतः ॥ दिनेदिनेप्रदातव्योयावत्संवत्सरंसुतैः ॥ मदनरत्नेगौतमः ॥ अदैवंपार्वणश्राद्धंसोदकुंभमधर्मकं॥
कुर्यात्प्रत्याब्दिकाच्छ्राद्धात्संकल्पविधिनान्वहं ॥ अत्रपिंडेविकल्पः ॥ अहरहरन्नमस्मैब्राह्मणायोदकुंभंचदद्यात्
पिंडमप्येकेनिगृण्हंतीतिहेमाद्रौपारस्करोक्तेः ॥ विशेषोनिर्णयसिंधौज्ञेयः ॥ देवजानीयेगारुडे प्रत्यहंदीपकोदेयो
मार्गेतुविषमेनरैः ॥ यावत्संवत्सरंवापिप्रेतस्यसुखलिप्सया ॥ कुर्याद्याम्यसुखंमिन्यमद्भिःसंकल्प्यसुस्थितं ॥ अथ-
मासिकानि ॥ तानिकृत्वैवसपिंडनंकार्यं श्राद्धानिषोडशादत्वानैवकुर्यात्सपिंडनमितिलौगाक्षिस्मृतेः सपिंडकिर-
णोत्तरंपुनः कार्याणि यस्यसंवत्सरादर्वाक्सपिंडीकरणंकृतम् ॥ मासिकंचोदकुंभंचदेयंतस्याापिवत्सरमितितेनै-

वोक्तेः ॥ सपिंडीकरणादर्वागपकृष्यकृतान्यपि ॥ पुनरप्यपकृष्यंतेवृद्ध्युत्तरानिषेधनादितिगालवोक्तेश्च तानिसपिं-
डनात्प्रागेकोद्दिष्टविधिनोर्ध्वंतुपार्वणेनकार्याणीत्यादिनिर्णयसिंधौज्ञेयम् ॥ तान्याहकात्यायनः ॥ द्वादशप्रतिमा-
स्यानि आद्यषाण्मासिकेतथा॥ सपिंडीकरणंचैवइत्येतच्छ्राद्धषोडशं ॥ त्रिपक्षिकाब्दिकेच्चेतिश्राद्धान्येतानिषोडशे-
ति ॥ जातूकर्ण्यपाठः ॥ आद्यमूनमासिकं ॥ षाण्मासिकम् ऊनषष्ठम् आब्दिकमूनाब्दिकंतेनामुकदासप्रेतत्वनिवृ-
त्यापितृलोकप्राप्त्यर्थमाद्यमासिकद्वितीयत्रैपक्षिक तृतीयचतुर्थ० पंचम० षष्ठ० ऊनषष्ठ० सप्तम० नवम० दशम०
एकादश० द्वादश० ऊनाब्दिकानि श्राद्धानिस्वकालकर्तव्यानि ॥ सपिंडीकरणाधिकारसिद्ध्यर्थमेकाद-
शेद्वादशेवाह्न्यपकृष्यकरिष्ये इत्युक्त्वाद्यमासिकेयंतेक्षणउपतिष्ठतामित्येवंषोडशविप्रान्कुशबटून्वानिधायाद्य-
मासिके इदंतेपाद्यमित्येवंसर्वंनवश्राद्धवत्कृत्वाषोडशामान्नानिपिंडांश्चदद्यात् अथसपिंडनंभविष्ये द्वादशेहनि ष-
ण्मासेत्रिपक्षेवात्रिमासिवा ॥ एकादशेथपूर्णेब्देमंगलस्याप्युपस्थितौ ॥ विष्णुः मासिकार्थवद्द्वादशाहंश्राद्धंकृत्वा
त्रयोदशेन्हिकुर्यात्मंत्रवर्ज्यंहिशूद्राणांद्वादशेहनिकीर्तितं॥ एतद्दर्शश्राद्धकारिशूद्रपरमित्यपरार्केकल्पतरौच आशौ-
चोत्तरंद्वादशस्वहःसुद्वादशमासिकानिकृत्वाद्वादशेसपिंडनं ॥ अधिकमासेतुत्रयोदशइत्यर्थः ॥ विस्तरोनिर्णयसिं-



धौज्ञेयः ॥ अथप्रयोगः ॥ देशकालौस्मृत्वा काश्यपगोत्रस्यास्मत्पितुरमुकप्रेतत्वनिवृत्यावस्वादिपितृलोकप्राप्त्य-
र्थमेकोद्दिष्टपार्वणोभयात्मकंसापिंडीकरणश्राद्धंकरिष्येइत्युक्त्वास्मत्पितुरमुकप्रेतस्यस्थानेक्षणंदत्वाभवद्भिः प्रसा-
दः कर्तव्यइत्येकंततः सव्येनकामकालसंज्ञकविश्वेदेवस्थानेक्षणंदत्वेत्यादिद्वौदैवे देवानंतरंवाप्रेतक्षणस्ततोपस-
व्येनास्मत्पितुरमुकदासस्यवसुरूपस्यस्थानेक्षणंदत्वेत्यादिएवमस्मत्पितुः पितामहस्यामुकदासरुद्ररूपस्यस्थाने-
इत्यादिएवमस्मत्पितुःप्रपितामहस्यामुकदासस्यादित्यरूपस्य॥ एवंषट्विप्राः कुशबटवोवा अक्रोधनैः शौचपरैरि-
तिजपः सर्वत्र प्रेतस्थानेनवश्राद्धवत् ॥ पित्र्येपार्वणवत् ॥ ततः परेद्युः संकल्प्यपुनः क्षणंदत्वादैवेचतुरस्रंमंडलं
कृत्वातद्दक्षिणेप्रेतायवर्तुलंत्रिकोणंवा कृत्वाक्रमेणपाद्यंदत्वाचम्यकामकालसंज्ञकाविश्वेदेवाः समाध्वंप्रेतस-
माध्वं प्रेतस्यपितृपितामहप्रपितामहाः समाध्वमित्यासनेषूपवेश्यनीवीबंधंकृत्वोपक्रांतंश्राद्धंकर्मकरिष्ये कुरु-
ष्वेत्युक्ते कामकालसंज्ञकानांविश्वेषांदेवानामिदमासनं सुखासनं अत्रास्यतांधर्मोसि दैवेक्षणः क्रीयतां० तथा
प्राप्नवानि एवंद्वितीयदैवे ततोद्वेअर्घपात्रेसंपन्नेइत्युक्त्वा ॥ कामकालसंज्ञकान्विश्वन्देवान्भवत्सु आवाहयिष्ये
आवाहयेत्युक्ते कामकालेभ्योनमः आगच्छंतुमहाभागाइतिवाऽवाह्यकामकाल० देवाइदंवोअर्घ्यमितिविप्रह-

येदत्वापात्रंन्युब्जंकृत्वागंधंपुष्पंधूपंदीपमाच्छादनानिदत्वासंपूर्णतांवाचायित्वा अपसव्येनास्मत्पितुः काश्यपगोत्रस्यामुकदासस्येदमासनमुपतिष्ठतां स्वासनं प्राप्नोतुभवानित्यादि ततः पितुः पित्रादीनांपार्वणवदासनानिचत्वार्यर्घ्यपात्राणि तत्राद्येचत्वारिपवित्राणित्रिषुत्रीणि ततः काश्यपगोत्रामुकप्रेतएषतेर्घउपतिष्ठतामिति दत्वाद्येत्यादिकाश्यपगोत्रस्यामुकप्रेतस्यार्घ्यंतात्पितृपितामहप्रपितामहाद्यैः संयोजयिष्ये संयोजयेत्युक्ते एकंपवित्रंपितृपात्रेदत्वा काश्यपगोत्रामुकप्रेतस्वपित्रामुकदासेनवसुरूपेणसहसंसृज्यस्वसायुज्यंगच्छेतितदर्घ्यैनिनीयैवंतात्पितामहेनरुद्ररूपेणेतिद्वितीये ॥ स्वप्रपितामहेनादित्यरूपेणसहेतितृतीये ॥ तत एषवोनुगतः प्रेतः पितरस्तंददामिवः ॥ शुभंभवतुशेषाणांजायंतांचिरजीविनः इत्यभिमृशेत् संसर्जनोत्तरंप्रेतायार्घ्यदानमितिमदनपालः ॥ ततः प्रेतपित्रादिभ्यः पार्वणवदर्घ्यत्रयंदत्वान्युब्जंपात्रंकृत्वागंधपुष्पधूपदीपाच्छादनालंकारान् प्रेताय तत्पित्रादिभ्यश्चदत्वापूर्णतांवाचयित्वा प्रेतेप्रेतायमायचेयमाहुतिरुपतिष्ठतामितिपाणौहुत्वावातत्पित्रादिषु चामान्नानिसंकल्प्योच्छिष्टपिंडंविकिरंचदत्वागृहपाकात् पायसेनसक्तुभिर्वाप्रेतायतत्पित्रादिभ्यः पिंडान्दत्वाग्नौकरणं कृत्वादैवेप्रेतेतत्पित्रादिषुत्वाद्येत्यादिकाश्यपगोत्रास्यामुकदासप्रेतस्यप्रेतत्वविमुक्त्यावस्वादिपितृलोकप्राप्त्यर्थंतत्पिंडंतत्पितृपितामहप्रपितामहानांकाश्यपगोत्राणाममुकदासानांवसुरुद्रादित्यस्वरूपाणांपिंडैः सहसंयोजयिष्ये संयोजयेत्युक्ते प्रेतपिंडं त्रेधाकृत्वैकभागंमधुचादायकाश्यपगोत्रामुकप्रेतत्वत्पिंडंत्वत्पित्रामुकगोत्रेणामुकदासेन वसुरूपेणसंयुनज्मिएषतेपिंडः तस्मैतेस्वधानमः एवंद्वितीयंभागंपितामहेनरुद्ररूपेण तृतीयंभागंप्रपितामहेनादित्यरूपेण ततः एषवोनुगतः प्रेतः इतिप्रागुक्तंमंत्रमुक्त्वाप्रत्यवनेजनपिंडपूजादिकृत्वादक्षिणांदत्वादशदानवैतरणीदानानिकृत्वाशेषंसमापयेत् ततः पाथेयश्राद्धंकृत्वावर्षांतंयावत्प्रत्यहमुदकुंभश्राद्धंस्वकालेपुनर्मासिकानिचकुर्यात् ॥ ॥ इति श्रीजगद्गुरुनारायणभट्टसूनुरामकृष्णभट्टात्मजकमलाकरभट्टकृतेशूद्रधर्मतत्त्वेऔर्ध्वदेहिकप्रयोगः ॥

॥ अथशूद्रधर्माः ॥ तत्रानुपनीतद्विजाः शूद्रसमाः शूद्रेणहिसमस्तावद्यावद्वेदेनयुज्यतेइतिमनूक्तेः साम्यंचकर्मानधिकारमात्रेण ॥ नतुस्नानपंचयज्ञाद्यस्ति प्रागुपनयनात्कामचारवादभक्षाइतिगोतमोक्तेः ॥ श्राद्धंतुमंत्रवद्भवत्येव नाभिव्याहारयेद्ब्रह्मस्वधानिनयनाद्दतेइतिमनूक्तेः ॥ ब्रह्मवेदः पाद्मेसृष्टिखंडेपि अमावास्याष्टकाकृष्णपक्षपंचदशीषुच ॥ एतच्चानुपनीतोपिकुर्यात्सर्वेषुपर्वसु ॥ श्राद्धंसाधारणंनामसर्वकामफलप्रदं ॥भार्याविरहितोप्येतत्प्रवासस्थोपिनित्यशः॥ शूद्रोप्यमंत्रवत्कुर्यादनेनविधिनाबुधः॥

एवंतीर्थे विशेषस्तुनिर्णयसिंधौश्राद्धाधिकारेज्ञेयः एवंद्विजस्त्रियोपि तासामपितस्यायावदुक्तमाशीर्ब्रह्मचर्यमतु-
ल्यत्वादितिषाष्ठन्यायेनानाधिकारात् श्रौतस्मार्तकर्मण्यग्निसाध्येधिकारोस्त्येव कामश्रुतिगतस्यपुंस्त्वस्योद्देश्यवि-
शेषणस्यषाष्ठन्यायेनाविवक्षितत्वात् पाणिग्रहणाद्धिसहत्वंकर्मसुतथापुण्यफलेषुचेत्यापस्तंबोक्तेश्च सूतसंहिता-
यामपि द्विजस्त्रीणामापिश्रौतज्ञानाभ्यासेधिकारिता ॥ वदंतिकेचिद्विद्वांसः स्त्रीणांशूद्रसमानतामितिस्त्रीशूद्राश्च
सधर्माणइतिस्मृतेश्च संस्काराअपिशूद्रवत्तूष्णीं अमंत्रिकातुकार्येयंस्त्रीणामावृदशेषतइतिमनूक्तेः तेनाधिकारी
भवेच्छूद्रः पूर्तधर्मेनवैदिके ॥ इतिजातूकर्ण्योक्तेर्बहिर्वेदिचयद्दानंतत्पौर्तिकमुदाहृतमितिव्यासोक्तेश्चशूद्रवत्तुला-
दिषोडशमहादानप्रासादजलाशयोत्सर्गादावप्यधिकारः फलेवाक्यगतस्यपुंस्त्वस्यषाष्ठनीत्याऽविवक्षितत्वात्
ततःसधवानांपत्यनुमत्यापृथगप्यधिकारः अग्निसाध्यत्वाभावात् विधवानांतुस्वातंत्र्यादस्त्येवाधिकारः एतच्चवि-
ज्ञानेश्वरेणव्यवहाराध्यायेसविस्तरमुक्तम् अतएवतुलादौपुमान्प्रद्युम्नवत्सस्यान्नारीस्यात्पार्वतीसमेतिस्त्रीणांफ-
लश्रवणं नचैवंशूद्रसधर्मत्वात्पंचयज्ञाआपिस्त्रीणांस्युरितिचेत् शृणु पंचयज्ञविधानंतुगृहीनित्यंनहापयेदिति
शंखाद्युक्तेर्यजेतेत्यादौकर्तृकत्ववत्पुंस्त्वस्यविवक्षितत्वान्नस्त्रियाः प्रसक्तिः नचनित्येकार्येश्रुतिरस्ति येनतद्गतपुं-



स्त्वाविवक्षयास्त्रियाअप्यधिकारः स्यात् नित्यत्वानुपपत्त्याप्रत्यवायाभावस्यकल्पितत्वात् वचनात्परंनित्येधि-
कारः यथामदनरत्नेस्कांदेप्रत्यहंतर्पणंकार्यंभर्तुः कुशतिलोदकैरितिश्राद्धेष्वपिनित्यनैमित्तिककाम्येष्वपुत्राया
भवत्येवाधिकारः भार्यापिंडंपतिर्दद्यात्भर्त्रेभार्यातथैवचेतिशंखोक्तेः अपुत्राशयनंभर्तुःपालयंतीव्रतेस्थिता ॥
पत्न्येवदद्यात्तत्पिंडंकृत्स्नमंशंलभेतचेतिवृद्धमनूक्तेश्च एतत्सविस्तरंनिर्णयसिंधावुक्तं यत्नफलश्रवणंविष्णुशिवपूज-
नादौतत्राधिकारोस्त्येव एवंव्रतादावपि तस्माच्छूद्रसमत्वेपिस्त्रीणांनपंचयज्ञाः किंतुभोजनकालेग्रासमात्रंघृत-
प्लुतमग्नौक्षिपेत् ॥ यस्यतेषामग्रतोन्नंसिद्धयेत्सवह्नौकृत्वाऽश्नीयादितिपृथ्वीचंद्रोदयेगोभिलोक्तेरितिदिक् ॥
विस्तरापत्तेर्बहुनोच्यते ॥ अथ स्त्रीधर्माः ॥ मनुः ॥ उत्पादनमपत्यस्यजातस्यपरिपालनम् ॥ प्रत्यहंलोक-
यात्राचप्रत्यक्षंस्त्रीनिबंधनं ॥ अपत्यंधर्मकार्याणिशुश्रूषारतिरुत्तमा ॥ दाराधीनास्तथास्वर्गः पितृणामा-
त्मनश्चह ॥ तस्माद्यत्नेनरक्ष्यास्ताभर्तव्यामनुरब्रवीत् ॥ अस्वतंत्राः स्त्रियः कार्याः पुरुषैश्चदिवानिशं ॥
विषयेषुचसज्जंत्यः संस्थाप्या ह्यात्मनावशे ॥ पितारक्षतिकौमारेभर्तारक्षतियौवने ॥ पुत्रास्तुस्थाविरे
भावेनस्वातंत्र्यंक्वचित्स्त्रियाः ॥ सूक्ष्मेभ्योपिप्रमादेभ्यः स्त्रियोरक्ष्याविशेषतः ॥ द्वयोर्हिकुलयोः शोकमा-

वहेयुररक्षिताः ॥ कालेऽदानापितावाच्योवाच्यश्चानुपयन्पतिः ॥ अगच्छन्नित्यर्थः ॥ मृतेभर्तरिपुत्रस्तुवाच्यो
मातुररक्षिता ॥ कल्पतरौपैठीनसिः अप्रमत्तारक्षततंतुमेनमपरक्षेत्रेपरबीजानिवाप्सु ॥ भार्यारक्षतकौमारेबिभ्र्यंतः
पररेतसः ॥ स्त्रियोगृहदेवतास्तासांनशौचंनव्रतंनोपवासः ॥ पतिशुश्रूषयागच्छंतिपरमांगतिं ब्राह्मे अमीमांस्या-
निशौचानिस्त्रीषुबालातुरेषुच ॥ भारते पानंदुर्जनसंसर्गः पत्याचविरहोऽटनं ॥ स्वापोन्यगेहेवासश्चस्त्रीणांवैदू-
षणानिषट् ॥ नैतारूपंपरीक्षंतेनासांवयासिसंस्थितिः ॥ सुरूपंवाकुरूपंवापुमानित्येवभुंजते ॥ शय्यासनमलंका-
रंकामंक्रोधमनार्जवं ॥ द्रोहभावंकुकार्यंचस्त्रीभ्योमनुरकल्पयत् ॥ नास्तिस्त्रीणांक्रियामंत्रैरितिधर्मेव्यवस्थितिः ॥
निरिंद्रियाह्यमंत्राश्चस्त्रियोनृतमितिस्थितिः ॥ नकश्चिद्योषितः शक्तः प्रसह्यपरिरक्षितुं ॥ अर्थस्यसंग्रहेचैनांव्यये-
च विनियोजयेत् ॥ शौचे धर्मेन्नपक्त्यां च पारिणाह्यस्य चेक्षणे ॥ मनुः बालयावायुवत्यावावृद्धयावापियोषिता ॥
नस्वातंत्र्येणकर्तव्यंकिंचित्कार्यंगृहेष्वपि ॥ पित्राभर्त्रासुतेनापिनेच्छेद्विरहमात्मनः ॥ एषांहिविरहेणस्त्रीगर्हिता
स्यात्कुलद्वये ॥ विष्णुः ॥ भर्तरिप्रोषितेनप्रतिकर्मक्रियापरगृहेषुनाभिगमनंद्वारदेशगवाक्षेष्वनवस्थानं याज्ञव-
वल्क्यः यत्रानुकूल्यंदंपत्योस्त्रिवर्गस्तत्रवर्धते ॥ रक्षेत्कन्यांपिताविन्नांपतिःपुत्रास्तुवार्धके ॥ अभावेज्ञातयस्तासां

नस्वातंत्र्यंक्वचित्स्त्रियाः ॥ भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ॥ बंधुभिश्चस्त्रियः पूज्याभूषणाच्छादनाशनैः ॥
संयतोपस्करादक्षाहृष्टाव्ययपराङ्मुखी ॥ कुर्याच्छ्वशुरयोः पादवंदनंभर्तृतत्परा ॥ स्त्रीभिर्भर्तृवचः कार्यमेष
धर्मः परःस्त्रियाः ॥ आशुद्धेः संप्रतीक्ष्योहिमहापातकदूषितः ॥ क्रीडांशरीरसंस्कारंसमाजोत्सवदर्शनं ॥ हास्यं
परगृहेयानंत्यजेत्प्रोषितभर्तृका ॥ बृहस्पतिः ॥ प्रसाधनंनृत्यगीतेसमाजोत्सवदर्शनं ॥ मांसमद्याभियोगंचनकु-
र्यात्प्रोषितेप्रभौ ॥ कल्पतरौशंखलिखितौ प्रोषितेभर्तरिप्रेंखातांडवविहारचित्रदर्शनावानोद्यानमानविकृत-
शयनोत्कृष्टपानभोजनकंदुकक्रीडागंधमाल्यालंकारदंतधावनांजनादर्शप्रसाधनादीनामनारंभः ॥ तत्रैवभारतेक-
ल्पतरौ एताः श्रियः स्त्रियोनामसत्कार्याभूतिमिच्छता ॥ लालितानिगृहीताचस्त्रीः श्रीर्भवतिभारत ॥ मनुः
यत्रनार्यस्तुपूज्यंतेरमंतेतत्रदेवताः ॥ यत्रैतास्तुनपूज्यंतेसर्वास्तत्राफलाः क्रियाः ॥ शोचंतिजामयोयत्रविनश्य-
त्याशुतत्कुलं ॥ नशोचंतितुयत्रैतावर्द्धतेतद्धिसर्वदा ॥ तस्मादेताः समभ्यर्च्याभूषणाच्छादनाशनैः ॥ जामयः
स्नुषाभगिन्यादयः ॥ कल्पतरौदक्षः जलौकेवचसर्वास्त्रीभूषणाच्छादनाशनैः ॥ सुभृतापिकृतानित्यंपुरु-
षंह्यपकर्षति ॥ जलौकारक्तमादत्तेकेवलंसातपस्विनी ॥ इतरातुधनंवित्तंमांसंवीर्यंबलंसुखं ॥ साशंकाबाल-

भावेतुयौवनेभिमुखीभवेत् ॥ तृणवन्मन्यतेनारीवृद्धभावेस्वकंपतिं ॥ अनपत्याभवेत्पश्चाद्यथाव्याधिरुपेक्षितः ॥
मनुः विधायवृत्तिंभार्यायाः प्रवसेत्कार्यवान्नरः ॥ अवृत्तिकर्शिताहिस्त्रीप्रदुष्येत्स्थितिमत्यपिया ज्ञवल्क्यः सत्या-
मन्यांसवर्णायांधर्मकार्यंनकारयेत्॥स्वधर्मासुविधौधर्म्येज्येष्ठयानविनेतरा॥छंदोगपरिशिष्टे अग्निशिष्टादिशुश्रूषांब-
हुभार्यः सवर्णया ॥ कारयेत्तद्बहुत्वंचेज्ज्येष्ठयागर्हितानचेत् ॥ यावास्याद्वीरसूरासामाज्ञासंपादिनीचया ॥ दक्षा
प्रियंवदाशुद्धातामत्रविनियोजयेत् ॥ कल्पतरौदक्षः धर्मपत्नीसमाम्नातानिर्दोषायदिसाभवेत् ॥ दोषेसतिनदोषः
स्यादन्याकार्यागुणान्विता ॥ मनुः॥ संवत्सरमुदीक्षेतद्विषंतींयोषितंपतिः ॥ ऊर्ध्वंसंवत्सरादन्यांकृत्वातांतुनसंवदे-
त् ॥ अतिक्रामेत्प्रमत्तंवामत्तंरोगार्त्तमेववा ॥ सात्रिमासात्परित्याज्याविभूषणपरिच्छदा ॥ उन्मत्तंपतितंक्लीबम-
पीनंपापरोगिणं ॥ नचद्विषंत्यास्त्यागोस्तिनचदायप्रवर्तनं ॥ मनुकात्यायनौ विशीलः कामवृत्तोवागुणैर्वापरि-
वर्जितः ॥ उपचर्यःस्त्रियाभर्तासततंदेववत्पतिः ॥ नास्तिस्त्रीणांपृथग्यज्ञोनव्रतंनाप्युपोषणम् ॥ पतिंसंसेवतेया
तुतेनस्वर्गेमहीयते ॥ पत्यौजीवतियानारीउपोष्यव्रतचारिणी ॥ आयुष्यंहरतेभर्त्तुर्नरकंचैवगच्छति ॥ कल्पतरौ
हारीतः ॥ नप्रोषितेलंकुर्यान्नवेणींमुंचेत् मदनरत्नेस्कांदे प्रसुप्तंचसुखासीनंरममाणंयदृच्छया ॥ आसुरेष्व-



पिकालेषुपतिंनोत्थापयेत्क्वचित् ॥ रजोवतीत्रिरात्रंतुस्वमुखंनैवदर्शयेत् ॥ स्ववाक्यंश्रावयेन्नापियावत्स्नातान
शुध्यति ॥ सुस्नाताभर्तृवदनमीक्षेन्नान्यस्यकस्यचित् ॥ अथवामनसिध्यात्वापतिंभानुंविलोकयेत् ॥ हरिद्रां
कुंकुमंचैवसिंदूरंकज्जलंतथा ॥ कूर्पासकंचतांबूलंमंगल्याभरणंशुभं ॥ केशसंस्कारकबरीकरकर्णविभूषणम् ॥
भर्तुरायुष्यमिच्छंतीदूरयेन्नकचित्सती ॥ नचदुर्भगयानार्यासखीत्वंकुरुतेतुसा ॥ भर्तुर्विद्वेषिणींनारींनसंभाषेत
कर्हिचित् ॥ नैकाकिनीक्वचिद्भूयान्ननग्नास्नातिवैक्वचित् ॥ नोलूखलेनमुसलेनवर्द्धिन्यांदृषद्यपि ॥ नयंत्रकेन
देहल्यां मथिननोपविशेत्क्वचित् ॥ उक्ताप्रत्युत्तरंदद्याद्यानारीक्रोधतत्परा ॥ साशुनीजायतेग्रामेश्शृगालीनिर्जने
वने ॥ अपवादोनवक्तव्यःकलहंदूरतस्त्यजेत् ॥ गुरूणांसन्निधौचापिनोच्चैर्ब्रूयान्नवाहसेत् ॥ ताडितातांडितु
येच्छेत्साव्याघ्रीद्वीपदंशिका ॥ भर्तारंयासमुत्सृज्यमिष्टमश्नातिकेवलं ॥ ग्रामेसासूकरीवास्याद्गर्दभीवाश्वविट्-
भुजा ॥ कल्पतरौयमः ऋतुस्नातातुयानारीभर्तारंनोपसर्पति ॥ तांग्राममध्येविख्याप्यभ्रूणघ्नींतुविवासयेत् ॥ बौ-
धायनः अशुश्रूषाकरींवंध्यांबधकींपरिहिंसकीं ॥ त्यजंतिपुरुषाःप्राज्ञाःसद्यस्त्वप्रियवादिनीं ॥ अप्रजांदशमे
वर्षेस्त्रीप्रजांद्वादशेत्यजेत् ॥ मृतप्रजांपंचदशेसद्यस्त्वप्रियवादिनीं ॥ वसिष्ठः व्यवायेतीर्थगमनेधर्मेभ्यश्चनिवर्त-

ते ॥ व्यवायोऽव्यभिचारः ॥ तीर्थयोनिः ॥ हारीतः धनधान्यक्षयकरींस्त्रियंसद्योविवर्जयेत् ॥ नारदः॥ व्यभिचारेस्त्रिया
मौंड्यमधःशयनमेवच ॥ कदन्नंचकुवाराश्वकर्मचावस्करोद्गतम् ॥ शंखः॥ नानुक्तागृहान्निर्गच्छेन्नानुत्तरीयात्वरि-
तंव्रजेन्नपरपुरुषंसंभाषेतनन्नाभिंसंदर्शयेदागुल्फाद्वासःपरिदध्यान्नस्तनौविवृतौकुर्यान्नहसेदपावृतंनभर्तारंनतद्बंधू-
न्वाद्विष्यान्नगणिकाधूर्तादिभिःसहैकत्रतिष्ठेत्॥ स्कांदेयाप्रियंप्रीणयेत्प्रीतात्रिलोकीप्रीणितातया॥ भुंक्तेभुक्तेतथा
पत्यौतस्मिंस्तिष्ठतितिष्ठति ॥ निद्रितेचाविनिद्रातिप्रथमंपरिबुध्यति ॥ अनलंकृतमात्मानंपत्युर्नोदर्शयेत्क्वचित् ॥
कार्यार्थंप्रोषितेपत्यौसर्वमंडनवर्जिता ॥ नचतन्नामगृण्हीयात्तस्यपुण्यविवृद्धये ॥ आक्रुष्टापिनचाक्रोशेत्ताडिता-
पिप्रसीदति ॥ एवंकुरुकृतंस्वामिन्मन्यतामितिवक्तिच ॥ आहूतागृहकार्याणित्यक्त्वागच्छतिसत्वरं ॥
पूजोपकरणंसर्वमप्सुसंशोधयेत्स्वयं ॥ नियमोदकवह्निश्वपत्रपुष्पादिकंचयत् ॥ सेवेतभर्तुरुच्छिष्टंमिष्टमन्नं
फलादिकं ॥ महाप्रसादइत्युक्त्वापातिदत्तंप्रतीच्छति ॥ कल्पतरौश्रृंगः गृहमेधाभवेन्नित्यं पूजयेन्मार्जयेद्गृहम् ॥
नित्यंस्नानकृतावेणींपूजयेत्पुष्पवाससा ॥ पूर्वमेवरहोगच्छेद्यावन्नान्यः प्रबुध्यते ॥ देवताराधनंकुर्याद्धूप-
पुष्पबलिंहरेत् ॥ शंखलिखितौवेलानुत्सवे गंधमाल्याभरणानिविकृतानिवासांसिबिभृयान्नपरपुरुषमभिभाषे-

तान्यत्रवणिक्प्रव्रजितवृद्धेभ्यः ॥ हारीतः स्नाताशुक्लेवाससीपरिधाय देवागारंप्रविश्यनमस्कृत्वान्नाद्यभिघार्यतत्र
हुतेदेवेभ्यउद्दाहाग्नौदेवपत्नीभ्यांहुत्वाबलिंहरेत् कृतेदेवातिथ्येयथास्वंगृहिणस्तर्पयित्वा शेषंपत्नीगुप्तेभुक्त्वाभां-
डानिनिर्णेज्यप्रक्षाल्यबहिरुत्तरपूर्वस्यांदिशिवास्तुपतिभूपतयेरुद्रायनमइतिनिर्नीयैवंसायंशृतादियथार्थसंविष्टेपुन-
र्मोभुवनपतेरुद्रायभस्मसदेभस्मनारक्षांकरोमीतिभस्मनाद्वारमपिधायस्वामिसुतादीनात्मानंचालयेत्यच्चान्यद्रक्ष्यं-
स्यात्तत्भस्मनास्पृशेदित्यर्थः ॥ आनम्यभर्तृपादौसंविशेन्नोपविष्टास्थितआसतिनोच्चैर्नवितर्कस्थानेनावीक्ष-
णमीक्षेत् परिमृज्यसंवाहयित्वोपासीतव्यजनेननोष्णेवर्षघर्माभोस्यगात्रेभ्यः परिमृज्यात्ग्रामांतरगतंभाराक्रांतं
शयानमुद्यच्छेद्धृष्टमनाअर्घेनार्चयेत् तथा परशयनासनवस्त्राभरणानिमनसापिनाध्यवस्येत् तथैकपात्र्यंम-
द्यमांसोच्छिष्टं निर्माल्यंचान्यत्रगुरुभर्तृसुतेभ्यः इतिस्कांदेतीर्थस्नानार्थिनीनारीपतिपादोदकंपिबेत् ॥ शंक-
रादपिविष्णोर्वापतिरेकोधिकः स्त्रियाः ॥ परशुरामप्रतापेरत्नावल्यांचस्कांदे प्रातःकालेतुयानारीदद्यादर्घ्यं
विवस्वते ॥ सप्तजन्मनिवैधव्यंसानारीनैवपश्यति ॥ कृत्वातुमंडलंबाह्येसूर्यंतत्राक्षतादिभिः ॥ पूजये-
त्ससततंयावैतस्यास्तुष्यंतिदेवताः ॥ प्रातःकालेतुयानारीशूचिर्भूत्वासमाहिता ॥ पूजयेद्द्वारदेशंतुसर्वान्कामा-

न्समश्नुते ॥ नददातियदानारीज्येष्ठायैप्रत्यहंबलिं ॥ भोज्याच्चैवयथाशक्तिसाप्रेत्यनरकंव्रजेत् ॥ अवश्यमेवनारी-
भिर्ज्येष्ठायाबलिकर्मणा ॥ प्रीणनंप्रत्यहंकार्यंपुत्रपौत्रधनेप्सुभिः ॥ कल्पतरौभारते यदैवभर्ताजानीयान्मंत्रमू-
लपरांस्त्रियं ॥ उद्विजेततदैवास्याः सर्पाद्वेश्मगतादिव ॥ तत्रैवविष्णूक्तंपृथ्वींप्रतिश्रीवाक्यं ॥ नारीषुनित्यंशुचिभू-
तिकासुस्वभर्तृभक्तप्रियवादिनीषु ॥ अमुक्तहस्तासुसुतान्वितासुसुगुप्तभांडासुबलिप्रियासु ॥ सुदृष्टवेश्मासुजितें-
द्रियासुकलिव्यपेतासुविलोलुपासु ॥ धर्मव्यपेक्षासुदयान्वितासुस्थितासदाहंजगतांविधात्री ॥ व्यासः ॥ द्वारोप-
वेशनंनित्यंगवाक्षेणनिरीक्षणं ॥ असत्प्रलापोहास्यंचदूषणंकुलयोषितां ॥ भारते अट्टशूलाजनपदाः शिवशू-
लाश्चतुष्पथाः ॥ वनिताः केशशूलिन्योभविष्यंतिकलौयुगे ॥ अस्यार्थमाहपरशुरामः अट्टमन्नंशिवोवेदः शूलं-
विक्रयएवच ॥ केशश्चभगमित्याहुर्वेदतत्त्वार्थदर्शिनः ॥ मनुः भर्तादैवंगुरुर्भर्ताधर्मतीर्थव्रतानिच ॥ तस्मात्सर्वंप-
रित्यज्यपतिमेकंसमर्चयेत् ॥ भुंक्तेभुक्तेपतौयातुस्वासीनाचाधिवासिते ॥ विनिद्रितेविनिद्रातिसास्त्रीज्ञेयापति-
व्रता ॥ अंगिराः आर्तार्तेमुदितेहृष्टाप्रोषितेमलिनाकृशा ॥ मृतेम्रियेतयापत्यौसास्त्रीज्ञेयापतिव्रता ॥ रजोवतीग-
र्भिणीधर्माः सहगमनान्वारोहणादौनिर्णयोविधिश्चनिर्णयसिंधावुक्तोस्माभिः ॥ अथविधवाधर्माः ॥ मदनरत्नपा-



रिजातयोः स्कांदे पत्यौमृतेपियायोषिद्वैधव्यंपालयेत्क्कचित् ॥ सापुनः प्राप्यभर्तारंस्वर्गलोकंसमश्नुते ॥ विधवा-
कबरीबंधोभर्तृबंधायजायते ॥ शिरसोवपनंतस्मात्कार्यंविधवयासदा ॥ एकाहारः सदाकार्योनोद्वितीयः कदाचन॥
त्रिरात्रंपंचरात्रंवापक्षव्रतमथापिवा ॥ मासोपवासंवाकुर्याच्चांद्रायणमथापिवा ॥ कृच्छ्रंपराकंवाकुर्यात्तप्तकृच्छ्रमथा-
पिवा॥यवान्नेनफलाहारैःशाकाहारैः पयोव्रतैः ॥ प्राणयात्रांतकुर्वीतयावत्प्राणः स्वयंव्रजेत्॥पर्यंकशायिनीनारीविध-
वापातयेत्पतिं ॥ तस्माद्भूशयनंकार्यंपतिसौख्यसमीहया ॥नैवांगोद्वर्तनंकार्यंस्त्रियाविधवयाक्कचित् ॥ गंधद्रव्य-
स्यसंयोगोनैवकार्यःस्वयंपुनः ॥ तर्पणंप्रत्यहंकार्यंभर्तुःकुशतिलोदकैः ॥ तत्पितुश्चापिकर्तव्यंनामगोत्रादिपूर्वकं ॥
इदंपुत्राद्यभावे विष्णोस्तुपूजनंकार्यंपतिबुद्ध्यानचान्यथा ॥ पतिमेवसदाध्यायेद्विष्णुरूपधरंपरं ॥ यद्यदिष्टतमं
लोकेयद्यत्पूर्वसमाहितं ॥ तत्तद्गुणवतेदेयंपतिप्रीणनकाम्यया ॥ वैशाखेकार्तिकेमाघेविशेषनियमंचरेत् ॥ स्नानं
दानंतीर्थयात्राविष्णोर्नामग्रहंमुहुः ॥ वैशाखेजलकुंभाश्चकार्तिकेघृतदीपकात् ॥ माघेतिलधनोत्सर्गात्स्वर्गलो-
केविशिष्यते ॥ प्रपाकार्याचवैशाखेदेवेदेयागलंतिका ॥ उपानत्व्यजनंछत्रंसूक्ष्मवासांसिचंदनं ॥ देयानिद्वि-
जमुख्येभ्यः पतिर्मेप्रीयतामिति ॥ एवंविधैश्चविधवाविविधैर्नियमैर्व्रतैः ॥ वैशाखान्कार्तिकान्माघानेवमेवाति-

वाहयेत् ॥ नाधिरोहेदनड्वाहंप्राणैःकंठगतैरपि ॥ कंचुकंनपरीदध्याद्वासोनविकृतंवसेत् ॥ एवंधर्मसमायुक्ताविधवापिपतिव्रता ॥ पतिलोकमवाप्नोतिनभवेत्क्कापिदुःखिनी ॥ श्राद्धंचषट्पिंडंकार्यं ॥ स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैवच ॥ विधवाकारयेच्छ्राद्धंयथाकालमतंद्रितेतिस्मृतिरत्नावल्यांवृद्धमनूक्तेः सुव्रतानां तासांनुलोकाः पतिभिः समानागोमायुलोकाव्यभिचारिणीनां ॥ हारीतः पतिव्रतातुसाध्वीयानिष्ठांयातिप्रभौमृते ॥ साहित्वासर्वपापानिपतिलोकमवाप्नुयात् ॥ बृहस्पतिः ॥ व्रतोपवासनिरताब्रह्मचर्यव्यवस्थिता ॥ दमदानरतानित्यमपुत्रापिदिवंव्रजेत् ॥ मनुः ॥ कामंतुक्षपयेद्देहंपुष्पमूलफलोदकैः ॥ नतुनामापिगृण्हीयात्पत्यौप्रेतेपरस्यतु ॥ मनुयमौ आसीतामरणात्क्षांतानियताब्रह्मचारिणी ॥ धर्मेणैवचकांक्षंतीसत्पतित्वमनुत्तमं ॥ स्त्रियाःश्रुतौवाशास्त्रेवाप्रव्रज्यानाभिधीयते ॥ प्रजाहितस्याःस्वोधर्मःसवर्णादितिधारणा ॥ अष्टाशीतिसहस्राणिमुनीनामूर्ध्वरेतसां ॥ दिवंगतानिविप्राणामकृत्वाकुलसंततिं ॥ मृतेभर्तरियानारीब्रह्मचर्येव्यवस्थिता ॥ स्वर्गंगच्छत्यपुत्रापियथाते ब्रह्मचारिणः ॥ स्कांदे अपृष्ट्वातुसुतान्किंचिन्नकुर्याद्भर्तृतत्परा ॥ इतिविधवाधर्माः ॥ तथाकुंडगोलकावपिशूद्रसमौ तथाचस्मृतिकौमुद्यांदेवलः द्वितीयेनतुयःपित्रासवर्णायांप्रजायते ॥ सवर्णोढइतिज्ञेयः शूद्र-

धर्माचजातितः ॥ व्रतहीनास्त्वसंस्कार्याःसवर्णास्वपियेसुताः ॥ उत्पादिताःसवर्णेनव्रात्याइतिबहिष्कृताइति ॥ तत्रैवाहमनुः ॥ परदारेषुजायेतेद्वौसुतौकुंडगोलकौ ॥ अमृतेजारजःकुंडोमृतेभर्तरिगोलकः ॥ ननुकुंडगोलकयोरब्राह्मणत्वेकथंश्राद्धेनिषेधः सहिब्राह्मणःश्राद्धसंपदइत्युक्तेर्ब्राह्मणमात्रप्राप्तौतेषांमध्येकेषांचिन्निषेधार्थः यदाह याज्ञवल्क्यः रोगीहीनातिरिक्तांगःकोणःपौनर्भवस्तथा ॥ अवकीर्णीकुंडगोलौकुनखीश्यावदंतकइतितयोश्चाब्राह्मण्येप्राप्त्यभावान्निषेधोऽव्यर्थः तथास्मृत्यर्थसारेब्राह्मेचतयोःसंस्कार्यत्वमुक्तंकेचिदाहुर्द्विजैर्जातौसंस्कार्यौकुंडगोलकाविति तदपिनयुज्यतइत्युच्यते ब्राह्मण्यांब्राह्मणाज्जातोब्राह्मणइतिभ्रमप्राप्तस्यश्राद्धनिषेधइतिविज्ञानेश्वरः कुंडगोलकयोः संस्कार्यत्वंश्राद्धेनिषेधश्चक्षेत्रजपरः शास्त्रानुज्ञानात् अन्यस्याब्राह्मणत्वेनप्राप्त्यभावादुपधेयसंकरेप्युपाधेरसंकरादित्यपरार्कः कल्पतरौकात्यायनः सुखार्थंयाप्रवृत्तास्त्रीनभर्तुः सुतकाम्यया ॥ पुत्रंतुजनयेदेवंनिंद्यापापाचसास्मृता ॥ भर्तृगोत्रंसमुत्सृज्यनारीयद्यन्यमाश्रयेत् ॥ निंद्यैवसास्मृतालोकेपरपूर्वेतिचोच्यते ॥ परपूर्वातुयत्रस्यात्तत्रस्यान्नाश्रितःप्रभुः ॥ क्रयाद्दत्तेतुधर्मार्थेलब्ध्वात्रास्वामिनोभवेत् ॥ निरोद्धव्याचताड्याचपरपूर्वापराधतः ॥ चौरहस्तान्नदीवेगाद्दुर्भिक्षाद्देशविप्लवात् ॥ विनिस्तीर्येसकांताराल्लब्धात्यक्ताक-

मागता ॥ आसांभोगेनदोषःस्यादितिशास्त्रविनिश्चयः ॥ स्वामिदत्तांतुगृह्णीयाद्देयाचेन्नत्वतोन्यथा ॥ दीयमान-
मथात्मानंयानारीनानुमोदते ॥ नसादेयानचग्राह्याविधिरेषस्मृतोबुधैः ॥ नचोत्तमांनचाकामातथापुत्रवतींनच ॥
ईदृशींत्वनुरूपेणनिष्क्रयेणप्रमीलयेत् ॥ यमः ॥ जारजातः सवर्णायांकुंडोजीवतिभर्तरि ॥ मृतेगोलकनामातुजा-
तिहीनौचतौस्मृतौ ॥ असवर्णासुनारीषुद्विजैरुत्पादिताश्चये ॥ परपत्नीषुसर्वासुकुंडास्तेगोलकाः स्मृताः ॥ मातृ-
वर्णानतेप्रोक्ताः पितृवर्णानचस्मृताः ॥ अविवाह्याः सुताश्चैषांबंधुभिःपितृमातृतः ॥ सएव कृच्छ्रंसांतपनंकु-
र्याद्धत्वासंकीर्णयोनिजं ॥ सूतंहत्वातिकृच्छ्रंतुकुंडगोलकमेवच ॥ मनुः जातोनार्यामनार्यायामार्यादार्योभवेद्गुणैः ॥
जातोप्यनार्यादार्यायामनार्यइतिनिश्चयः ॥ नीचायामुत्तमजौसंस्कार्यौउत्तमायांनीचजौनेत्यर्थः स्मृतिकौमुद्या-
मादित्यपुराणे सवर्णासुसवर्णैस्तुयेजायंतेपरैरपि ॥ अवरोठकसंज्ञास्तेव्रतसंस्कारवर्जिताः ॥ विप्रायांविप्रजाउ-
पनेयानान्येइतितत्रैवोक्तंचतुर्णामपिवर्णानांजीवतामन्यसंभवः ॥ कुंडस्तुसंकरोज्ञेयोमृतानामथगोलकः ॥ जाति-
हीनःसमातॄणांग्राहयेत्कर्मनामनी ॥ तदीयंकर्मनामचतन्मातॄणामित्यर्थः योऽयोदेवपुरेराज्ञावर्णसंकरभीरुणा ॥
देवपुरेदेवद्वारे कुंडोवागोलकोविप्रः संध्योपासनमात्रवित् ॥ स्नानभोजनसंध्यासुदेवेषुसपठेच्चतत् ॥ विप्रइ-



त्युक्तेस्तस्यैवसंध्योपनयनंच ॥ मिताक्षरायामपिकुंडगोलकौयथार्हसंस्कार्यावित्युक्तं स्मृत्यर्थसारेप्रयोगपारिजा-
तेब्राह्मेच एवमेवद्विजैर्जातौसंस्कार्यौकुंडगोलकाविति स्नानेति स्नानादिसमयेबंदिवद्वाक्यंपठेदित्यर्थः इतिकुं-
डगोलकौ तथाद्विजोत्पन्नः षंढोपिशूद्रसमः वसंतेब्राह्मणमुपनयीतेत्युपनयनविधौचसमाध्वर्युवदुपादेयत्वेनावि-
वक्षितपुंस्त्वात्स्त्रीणामिवतस्याप्युपनयनाभावात् अष्टवर्षवाक्येउद्देश्यत्वेपिप्राप्तानुवादेनपुंसएवानुवादात्॥मिता-
क्षरायांदेवलोपि षंढकोलिंगहीनःस्यात्संस्कारार्हश्चनैवसइति अतएवतत्रैववृद्धमनुः षंढंतुब्राह्मणंहत्वाशूद्रहत्या-
व्रतंचरेदितिबौधायनसूत्रेस्मृत्यर्थसारेचवचनादुपनयनमुक्तं प्रयोगपारिजातेब्राह्मेपि ब्राह्मण्यांब्राह्मणाज्जातोब्रा-
ह्मणः सइतिश्रुतिः ॥ तस्माच्चषंढबधिरकुब्जवामनपंगुषु ॥ इत्याद्युक्त्वाध्वस्तपुंस्त्वेषुसंस्काराः स्युर्यथोचित-
मिति एतच्चोक्तंप्राक् सचसप्तविधः तथाचगौडधृतदेवलः षंटकोवातजः पंडः षंढः क्लीबोनपुंसकं॥ कीलकश्चेति
सप्तैवक्लीबभेदोव्यवस्थितः॥ एषांस्वरूपमाह सएव तेषांस्त्रीतुल्यवाक्चेष्टः स्त्रीतुल्यःषंढकोभवेत् ॥उन्नतकुचककू-
र्पहीनत्वादिधर्मकइत्यर्थः ॥पुमान्कृत्वासलिंगानिपश्चाद्भिंद्यात्तथैवच॥ स्त्रीचपुंभावमास्थायपुरुषाचारवद्गुणा॥
वातकोनामषंढःस्यात्स्त्रीषंढोवापिनामतः॥ लिंगानिस्त्रीपुंनपुंसकानिभिंद्यात्त्यजेत् कदाचित्स्त्रीकदाचित्पुमान्

कदाचित् षंढइत्यर्थः ॥ स्त्रीचपुरुषवत्स्थ्यंतरंभुंक्तेशुक्रोत्सर्गविनैववातवशादित्यर्थः॥ असाछिंगोथपंडःस्यात्षंढस्तु-
लाम्नमेहनः ॥ अमेध्याशीपुमान्क्लीबोनष्टरेतानपुंसकः ॥ अमेध्याशामुखमेथुनात्परशुक्राशी अयंवैद्यकेआसेक्य-
इत्युक्तः तदुक्तंसुश्रुते आसेक्योनामभवतिदंपत्योरल्पवीर्ययोः ॥ सशुक्रंप्राश्यलभतेलिंगोच्छ्रायमसंशयं ॥ सकी-
लक इतिप्रोक्तोयःक्लैब्यादात्मनःस्त्रियं ॥ अन्येनसहसंयोज्यपश्चात्तामेवसेवते ॥ सुश्रुतेत्वन्येपि यःपूतियोनौजाये-
तस सौगंधिकसंज्ञकः ॥ सयोनिशेफसोर्गंधमाघ्रायलभतेबलं ॥ स्वेगुदेमैथुनाद्यस्तुस्त्रीषुपुंवत्प्रवर्तते ॥ कुंभीकःस
तुविज्ञेयईर्ष्यकंश्रृणुचापरं ॥ दृष्ट्वाव्यवायमन्येषांव्यवायेयःप्रवर्तते ॥ ईर्ष्यकःसतुविज्ञेयःषंढकंशृणुपंचमं ॥ यो
भार्यायामृतौमोहादंगनेवप्रवर्त्तते ॥ ततः स्त्रीचेष्टिताचारोजायते षंढसंज्ञितः ॥ माधवीयेतुचतुर्दशभेदाउक्ताः त-
त्रैवज्ञेयाः तेषांचोपयनव्रतचतुष्टयसमावर्तनविवाहवर्जंसर्वेसंस्कारास्तूष्णींभवंति कुमारंजातमित्यादौसंस्कार्यरू-
पोद्देश्य गतत्वेनपुंस्त्वस्याविवक्षयास्त्रीणामिवषंढस्यापिप्राप्तेः तूष्णीमेताःक्रियाःस्त्रीणांविवाहस्तुसमंत्रक इति-
याज्ञवल्क्योक्तेः तेचस्त्रीतुल्यवाक्चेष्टाःस्त्रीधर्माणःप्रकीर्तिता इतिवृद्धमनूक्तेश्च जलाशयागमप्रासाददेवप्रतिष्ठा-
महादानादिष्वप्येवं षाष्ठन्यायेनकामश्रुतिगतस्यपुंस्त्वस्योद्देश्यगतत्वेनाविवक्षयास्त्रीणामिवाधिकारात् एवंस-

र्वदानेषु अहिंसादेःसाधारण्याच्चपितुः श्राद्धादौतुनाधिकारः यश्चार्थहरःसपिंडदायीत्यापस्तंबेनार्थहरस्यैवपिं-
डदानोक्तेः षंढस्यचअनंशौक्लीबपतितौपंगुरुन्मत्तकोजडइतिमन्वाद्यैरर्थहरत्वनिषेधात् याज्ञवल्क्योपि क्लीबाद्या-
नोदकंकुर्युःस्तेनाव्रात्याविधर्मिणइति ॥ इतिषंढाःअन्येपिशूद्रसमाः कल्पतरौयमेनोक्ताः प्रव्रज्योपनिवृत्ताश्चवृथा-
प्रव्रजिताश्चये ॥ याश्चप्रव्राजिताज्जातः प्रव्रज्यावसितश्चयः॥ एतेशूद्रसधर्माणोमनुनापरिकीर्तिताः ॥ याज्ञवल्क्यः॥
प्रव्रज्यावसितोराज्ञोदासआमरणांतिकः ॥ अन्येपिशूद्रसमायाज्ञवल्क्येनोक्ताः सद्यःपततिमांसेनलाक्षयालवणेन-
च ॥ मांसेनशूद्रोभवतिब्राह्मणः क्षीरविक्रयात् ॥ अत्रधर्मनिंदामात्रमितिवार्तिकेभट्टाचार्याः द्विजातिकर्महानिप-
राणीतिविज्ञानेश्वरः ॥ अतस्तेशूद्रसमाः ॥ तथाव्रात्याअपि तथाचमनुः ब्राह्मणाः क्षत्रियावैश्याः स्वावधेरूर्ध्वं-
मब्दतः ॥ अकृतोपनयाःसर्वेवृषलाएवतेस्मृताः ॥ व्रात्यस्तोमंविना ॥ तदाहयाज्ञवल्क्यः आषोडशाद्द्वाविंशाच्च
चतुर्विंशाच्चवत्सरात् ॥ब्रह्मक्षत्रविशांकालऔपनायनिकःपरः॥ अतऊर्ध्वंपतंत्येतेसर्वधर्मबहिष्कृताः ॥ सावित्रीप-
तिताव्रात्याव्रात्यस्तोमादृतेक्रतोः ॥ अथशूद्रसमान्वक्तुंसंकरजाउच्यंतेकल्पतरौदेवलः नष्टःप्रव्रजितःक्लीबःप-
तितोराजाकिल्बिषी ॥ लोकांतरगतोवापिपरित्याज्यःस्त्रियापतिः ॥ मृतेभर्तरिजीवेवास्त्रीविंदेतापरंपातिं ॥ संत-

त्यनाशार्थतयानस्वातंत्र्येणयोषितः ॥ नारदः अष्टौवर्षाण्युदीक्षेतब्राह्मणीप्रोषितंपतिं ॥ अप्रसूतातुचत्वारिद्वेसमे-
ह्यप्रसूतिका ॥ नशूद्रायाःस्मृतःकालोनचधर्मव्यतिक्रमः ॥ विशेषतोप्रसूतायाःस्त्रियाः संवत्सरास्थितिः ॥ अप्र-
वृत्तौस्मृतःकालएषप्रोषितयोषितां ॥जीवतिश्रूयमाणेतुस्यादेषद्विगुणोविधिः ॥ प्रजाप्रवृत्तौनारीणांवृत्तिरेषाप्रजा-
पतेः ॥ अतोन्यगमनेस्त्रीणामेषदोषोनविद्यते ॥ इतिनियोगः ॥ याज्ञवल्क्यः विप्रान्मूर्धावसिक्तोहिक्षत्रियायांविशः
स्त्रियां ॥ अंबष्ठः शूद्र्यांनिषादोजातःपारसवोपिवा ॥वैश्याशूद्र्योस्तुराजन्यान्माहिष्योग्रौसुतौस्मृतौ॥ वैश्यात्तुकरणः
शूद्र्यां विन्नास्वेषविधिस्मृतः ॥ एवंमूर्धावसिक्तांबष्ठपारसवमाहिष्योग्रकरणाःषडनुलोमा मातृजात्युक्तकर्मभाजश्च
एतेहीनवर्णासुजाताः एतास्तुचोत्कृष्टजाअनुलोमानीचजाःप्रतिलोमाः मनुःब्राह्मणादुग्रकन्यायामावृत्तोनामजा-
यते ॥ शूद्रायांक्षत्रजाउग्राः याज्ञवल्क्यः माहिष्येणकरण्यांतुरथकारःप्रजायते ॥ क्षत्राद्वैश्यायांमाहिष्यःवैश्याच्छूद्रा-
यांकरणी तस्यांरथकारःएषांवृत्तीराहस्मृतिकौमुद्यांवसिष्ठः ॥ मूर्धावसिक्तानांहस्त्यश्वरथशस्त्रशिक्षास्त्रधारणंचम-
णिमंत्रौषधैःप्राणिरक्षणमंबष्ठानांमाहिष्याणांगीतनृत्यनक्षत्रैर्जीवनंसस्यरक्षाचपारसवोग्रकरणानांद्विजशुश्रूषाधना-
ध्यक्षताराजसेवादुर्गांतःपुररक्षाच रथकारस्यनिधिज्ञानंहस्त्यश्वसारथ्यवर्द्धनपोषणदमनादि शंखः क्षत्रियवैश्यानु-



लोमानंतरोत्पन्नजोरथकारस्तस्याध्ययनेज्यादानोपनयनसंस्काराश्चाप्रतिषिद्धाः रथसूत्रवास्तुविद्याध्ययनवृत्तिता
चेतिजातिविवेके ॥ शूद्रांशयनमारोप्यब्राह्मणश्चेत्कथंचन ॥ जनयेद्ग्राम्यधर्मेणतस्यांपारसवंसुतं ॥ महाशूद्रः
साविख्यातः शूद्रेभ्यः किंचिदुत्तमः ॥ स्वर्णकारस्यतस्येहस्नानंधौत्रंपावित्रकं ॥ सर्वशूद्रस्यधर्मेणवर्तनंतस्यजी-
विका ॥ तथा कूटस्वर्णव्यवहारीविमांसस्यचविक्रयी ॥ राज्ञाविप्रस्तुकर्तव्योदाप्यश्चोत्तमसाहसं ॥ उशनाः ॥
क्षत्रियाविप्रसंयोगाज्जातोमूर्धावसिक्तकः ॥ राजन्यःक्षत्रधर्मेभ्योभ्यधिकः संप्रकीर्तितः ॥ आथर्वणक्रियांकुर्व-
न्नित्यनैमित्तिकीं क्रियां ॥ अश्वंरथंहस्तिनंवावाहयेद्वैनृपाज्ञया ॥ सैनापत्यंचभैषज्यंकुर्याज्जीवेच्चवृत्तिषु ॥ आ-
युर्वेदमथाष्टांगंतंत्रोक्तंधर्मतश्चरेत् ॥ ज्यातिषंगणितं वापिकायिकींवृत्तिमाचरेत् ॥ वैश्यायांविधिनाविप्राज्जातो
ह्यंबष्ठउच्यते ॥ कृष्णाजीवोभवेत्तस्यतथैवाग्रेप्रवर्तकः ॥ नरवाजिगजादीनांचिकित्सातस्यजीविका ॥ वा-
ग्भट्टः ॥ सप्तवापंचवातिस्रोयोनवोत्तिहिसंहिताः ॥ राज्ञातस्यकुवैद्यस्यच्छेत्तव्योदक्षिणः करः ॥ मनुः ॥ प्रा-
यश्चित्तंचिकित्सांचज्योतिषंधर्मनिर्णयं ॥ विनाशास्त्रेणयोब्रूयात्तमाहुर्ब्रह्मघातकं ॥ अयंशस्त्रवैद्यः ॥ वैश्यायां
क्षत्रियाज्जातोमहिष्यस्त्वनुलोमजः ॥ अष्टाधिकारनिरतः श्चतुषष्ट्यंगकोविदः ॥ व्रतबंधादिकास्तस्यक्रियाः

स्युःसकलाविशः ॥ ज्योतिषंशाकुनंशास्त्रंस्वरशास्त्रंचजीविका ॥ विश्वंभरशास्त्रे ॥ शूद्र्यांक्षत्रादुग्रजातिर्युद्धशा-
स्त्रादिजीविका ॥ शस्त्रास्त्रन्यासकुशलः संग्रामकुशलोभवेत् ॥ तयावृत्त्याह्यजीवन्वैशूद्रधर्मांश्चपालयेत् ॥
अयंरजपूतइतिप्रसिद्धः शूद्रधर्माच ॥ शूद्र्यांजातस्तुवैश्याद्वैकरणोलिपिलेखकृत् ॥ याज्ञवल्क्यः ॥ जात्युत्क-
र्षोयुगेज्ञेयः सप्तमेपंचमेपिवा ॥ व्यत्ययेकर्मणांसाम्यंपूर्ववच्चाधरोत्तरं ॥ जात्युत्कर्षउत्कृष्टजातिप्राप्तिः सप्तमे
अपिशब्दात्षष्ठे पंचमेवाज्ञेयः ॥ अयमर्थः ॥ विप्रोढाशूद्राकन्यांसूते सापितदूढान्यामितिसप्तमंविप्रंसूते एवं
विप्रोढवैश्याजन्याकन्याषष्ठंविप्रं विप्रोढक्षत्रियाजन्यापंचमं क्षत्रियाच्छूद्रोत्पन्नाषष्ठंक्षत्रियं वैश्यजापंचमंवै-
श्यमितिपूर्वार्धार्थः ॥ एवंविप्रस्यक्षात्रवृत्त्याऽपत्यपरंपरयाजीवनेपंचमः क्षत्रियः वैश्यवृत्तौजीवनेषष्ठोवैश्यः ॥
शूद्रवृत्तौपंचमोवैश्यः शूद्रवृत्तौषष्ठः शूद्रः वैश्यस्यशूद्रवृत्तौपंचमः शूद्रइति ॥ अथप्रतिलोमजाः ॥ कल्पतरौ
कात्यायनः ॥ नियोगोत्पादनंकुर्याद्यथोक्तंतद्विशुद्धये ॥ द्विजस्त्रीषुचधर्मोयंशूद्रस्यैतत्सदाभवेत् ॥ शूद्रेषुननि-
योगइत्यर्थः ॥ बृहस्पतिः ॥ उक्तोनियोगोमनुनानिषिद्धःस्वयमेवतु ॥ युगन्हासादशक्योयंकर्तुंमर्त्यैर्विधानतः ॥
अनेकधाकृताः पुत्राऋषिभिर्येपुरातनैः ॥ नशक्यं तेधुनाकर्तुंशक्तिहीनैरिदंतनैः ॥ तत्रैवहारीतः ॥ स्वैरिणीच



पुनर्भूश्चरेतोधाः कामचारिणी ॥ सर्वभक्षाचविज्ञेयाः पंचैताः शूद्रयोनयः ॥ एतासांयान्यपत्यानिउत्पद्यंतेक-
दाचन ॥ नतान्पंक्तिषुयुंजीतनतेपंक्त्यर्हकाः स्मृताः ॥ रेतोधाः कुंडमाता ॥ कामचारिणीचतुर्भ्योधिकपुरुष-
गा ॥ सर्वभक्षासुरापी ॥ याज्ञवल्क्यः ॥ ब्राह्मण्यांक्षत्रियात्सूतोवैश्याद्वैदेहकस्तथा ॥ शूद्राज्जातस्तुचांडालः
सर्वधर्मबहिष्कृतः ॥ क्षत्रियामागधंवैश्याच्छूद्रात्क्षत्तारमेवच ॥ शूद्रादायोगवंवैश्याजनयामासवैसुतं ॥ मागधो
बंदी ॥ क्षत्तानिषादोभिल्लइतिप्रसिद्धः ॥ आयोगवः पुल्कसः ॥ तदाहहारीतः ॥ क्षत्रियायांवैश्यशूद्रौबंदिनि-
षादौजनयतोवैश्यायांशूद्रःपुल्कसानिति ॥ व्यासोपि ॥ शूद्रान्निषादोमत्स्यघ्नः क्षत्रियायांव्यतिक्रमात् ॥ ते-
नद्वौनिषादौएकः प्रागुक्तोनुलोमः अयंचैकः ॥ जातिविवेके ॥ क्षत्रियाशूद्रसंयोगात्क्षत्तारंजनयेत्सुतं ॥ निषा-
दइतिविख्यातः सर्ववर्णबहिष्कृतः ॥ वागुरापाशपाणिस्तुमृगबंधनकोविदः ॥ आरण्यपशुजातीनामंतकश्चवने-
चरः ॥ क्रोधान्वितोमांसवृत्त्यातयाजीवेत्सदैवहि ॥ घंटांपापर्धिकांकुर्याद्रात्रौविस्मयकारिणीं ॥ द्विधाचमृगयाप्रो-
क्ताव्योमभूचारिणामिह ॥ विक्रयंमधुनःकुर्याद्धनमिच्छन्समृद्धये ॥ यमस्तु ॥ मागधनिषादयोःसंज्ञांतरमाह ॥ क्षत्रि-
यायांतुवैश्येनमुचुपोनामजायते ॥ शूद्रेणजायतेमद्गुः क्षत्रियायत्रमुह्यति ॥ मोहोमैथुनं ॥ स्मृत्यंतरे क्षत्रियामागधं

वैश्याज्जनयामासवैसुतं ॥ सबंदीजनइत्युक्तोव्रतबंधविवर्जितः ॥ शूद्रेभ्योऽभ्यधिकः किंचित्तस्यजीवनमुच्यते ॥
काव्यालंकारगद्यादिषट्भाषासुकलाक्षमः ॥ गद्यपद्यानिचित्राणिविरुद्धानिमहीभृतां ॥ क्षत्रियायांवैश्यजातःक्ष-
त्तावेत्रधरोभवेत् ॥ लघुजातिविवेके ॥ सूतास्तेयेपुराणस्थानुच्चरंतिनृपान्सदा ॥ येल्पकालगतान्शूरान्वर्णयं-
तिचमागधाः ॥ वर्तमानान्नृपान्सम्यक्कृतसंग्रामकर्मणः ॥ वर्णयंतिप्रबंधैर्येबंदिनस्तेप्रकीर्तिताः ॥ मनुः ॥
कारावरंनिषादात्तुचर्मकारंप्रसूयते ॥ वैदेहीतिशेषः ॥ वैदेहकारंध्रमेदौबहिर्ग्रामप्रतिश्रयौ ॥ विप्रायांवैश्यजोवै-
देहःतस्मात्कारावरर्यामंध्रः निषाद्यांमेदइतिमेधातिथिः ॥ अंगिरसात्वन्येपिचंडालाउक्ताः यस्तुप्रव्रजिताज्जा-
तोब्राह्मण्यांयश्चशूद्रजः ॥ तावुभौविद्धिचांडालौसगोत्राद्यश्चजायते ॥ यमोपि ॥ आरूढपतितापत्यंब्राह्मण्यां
यश्चशूद्रजः ॥ सगोत्रोढासुतश्चैवचंडालास्त्रयईरिताः ॥ मनुः ॥ पुल्कसमप्याह जातोनिषादाच्छूद्रायांजा-
त्याभवतिपुल्कसः ॥ शूद्राज्जातोनिषाद्यांतुसवैकुक्कुटकःस्मृतः ॥ क्षत्तुर्जातस्तथोग्र्यांतुश्वपाकइतिचोच्यते ॥
वैदेहकेनत्वंबष्ठ्यामुत्पन्नोवेनउच्यते ॥ शूद्रात्क्षत्रियाजःक्षत्ता क्षत्राच्छूद्रायामुग्रातताभ्यांश्वपाकः वैश्याद्विप्रायांवै-
देहः विप्राद्वैश्यायामंबष्ठी तस्यांवेनः ॥ एषांवृत्तीराहवसिष्ठः ॥ सूतानांमंत्रिकायस्थत्वस्त्रीजीवनवस्त्रपूरणानि-



मंत्रित्वंकायस्थोलेखकस्तत्वंच ॥ वैदेहकानांनटवृत्तिरंगावतरणे ॥ वेनानांदारुच्छेदनभ्रमरोपणंमणिमुक्ताप्र-
वालवेधनंच ॥ भ्रमःशाणः ॥ आयोगवानांताम्रायस्त्रपुसीसायुधकरणं योजनंनगरकरणंच ॥ सैरंध्राणांसु-
रामद्यसीधुकरणं तद्विक्रयः पुष्पफलशाकविक्रयश्च ॥ विश्वंभरशास्त्रे विप्रायांयःसुतःक्षत्रात्सूताख्योगजबंधकृ-
त् ॥ दमनंतुरगाणांचकुर्यात्तज्जीवनंपरं ॥ नृपाद्ब्राह्मणकन्यायांविवाहेषुसमन्वयात् ॥ जातःसूतस्तुनिर्दिष्टः
प्रतिलोमविधिर्द्विज ॥ विवाहसंबंधेऊढायांब्राह्मणकन्यायामित्यर्थः ॥ वेदानर्हास्तथाचैषांधर्माणामनुबोधकः ॥
ब्राह्मण्यांतुसुतोजातोवैश्याद्वैदेहकः स्मृतः ॥ पाषाणकाष्ठयोःशिल्पंतस्यजीवनमुत्तमं ॥ मनुः ॥ सूतानामश्व-
सारथ्यमंबष्ठानांचिकित्सितं ॥ वैदेहकानांस्त्रीकार्यमागधानांवणिक्पथः ॥ स्त्रीकार्यमंतःपुररक्षावणिक्पथोराजमा-
र्गस्तद्रक्षा ॥ मत्स्यघातोनिषादानांतष्टिरायोगवस्यच ॥ तष्टिर्दारुतक्षणं ॥ वर्द्धकिरित्यर्थः ॥ उशनसातुनृपा-
यांवैश्यसंसर्गादायोगवइतिस्मृतः ॥ तंतुवायाभवंत्येतेवस्त्रकांस्योपजीविनः ॥ शालिकाःकेचिदत्रैवजीवनंवस्त्र-
निर्मितं ॥ क्षत्तुग्रपुल्कसानांतुबिलौकोवधबंधने ॥ बिलौकसः सर्पादयः उग्रोत्रप्रतिलोमजः तन्मध्यपाठादि-
तिस्मृतिमंजर्यां ॥ धिग्वणानांचर्मकार्यंवेनानांभांडवादनं ॥ भांडंमुरजपटहादि ॥ चैत्यद्रुमश्मशानेषुशैलेषूपव-

नेषुच ॥ वसेयुरेतेविज्ञातावर्तयंतः स्वकर्मभिः ॥ विज्ञाताज्ञातिचिन्हांकिताः ॥ चंडालश्वपचानांतुनिर्ग्रामः
स्यात्प्रतिश्रयः ॥ अत्रपात्राश्चकर्तव्याधनमेषांश्वगर्दभं ॥ निर्ग्रामोबहिर्ग्रामः अवपात्रंभिन्नपात्रं यद्वा
पाकपात्रादिहीनाः यद्दक्ष्यति अन्नमेषांपराधीनामिति ॥ यद्वा तद्धस्तस्थेपात्रेऽन्नादिनदेयं किंतु भूमिस्थे वा-
सांसिमृतचैलानिभिन्नभांडेचभोजनं ॥ कार्ष्णायसमलंकारःपरिव्राज्याचनित्यदा ॥ परिव्राज्याएकत्रानवस्थानं ॥
नतैःसमयमन्विच्छेत्पुरुषोधर्ममाचरन्॥ व्यवहारोमिथस्तेषांविवाहःसदृशैःसह ॥ अन्नमेषांपराधीनंदेयंस्याद्भि-
न्नभाजने ॥ रात्रौनविचरेयुस्तेग्रामेषुनगरेषुच ॥ कार्यार्थविचरेयुर्वाचिह्निताराजशासनैः ॥ अबांधवंशवंचैवनि-
र्हरेयुरितिस्थितिः ॥ वंध्यांश्चहन्युःसततंयथाशास्त्रंनृपाज्ञया ॥ वध्यवासांसिगृह्णीयुः शय्याश्चाभरणानिच ॥
ब्राह्मणार्थेगवार्थेवादेहत्यागोनुपस्कृतः ॥ धनाद्यलोभोनुपस्कारइतिमेधातिथिः ॥ स्त्रीबालाभ्यवपत्तौचबलिनां
सिद्धिकारणं ॥ स्त्रीबालादिविपत्तौचदेशत्यागइत्यनुषंगःसिद्धिःश्रेयः ॥ उशनाः ॥ सीसमाभरणंतेषांकालायसम-
थापिवा ॥ वर्ध्रींकंठेसमाबध्यझल्लरींकच्छतोपिवा ॥ मलापकर्षणंकुर्युःपूर्वाह्णेपरिशुद्धिकं ॥ पिंडीभूतावसेयुस्ते
नोचेद्वध्याविशेषतः ॥ तथा ॥ व्रात्योत्पन्नाः शूद्रसमाः ॥ तानाहमनुः व्रात्यात्तुजायतेविप्रात्पापात्माभूर्ज्जकंट-

कः ॥ आवंत्यवाटधानौचपुष्पशेखरएवच ॥ विप्रायांजायतेव्रात्यविप्रजोभूर्ज्जकंटकः ॥ आवंत्याद्यास्तस्यैवसंज्ञा
इतिमेधातिथिः ॥ अन्येतुभूर्ज्जकंटकाद्विप्रायामावंत्यः ॥ तस्मात्तस्यांवाटधानः तस्माच्चपुष्पशेखरइत्याहुः ॥ एव-
मग्रेपि ॥ विश्वंभरेएतानुक्त्वा एतैस्तुजीवनार्थायकार्यंविष्ण्वादिपूजनं ॥ नृत्यगीतादिवादित्रशंखवीणादिवाद-
नम् ॥ झल्लोमल्लश्चराजन्याद्व्रात्याल्लिच्छिविरेवच ॥ नटश्चकरणश्चैवखसोद्रविडएवच ॥ क्षत्रियायांव्रात्यक्षत्रजा
एतेअयमन्यः करणोनुलोमात् ॥ वैश्यात्तुजायतेव्रात्यात्सुधन्वाचार्यएवच ॥ कारूषश्चविजन्माचमैत्रःसात्वतएव
च ॥ वैश्यायामेव ॥ आदित्यपुराणे ॥ ब्राह्मण्यांब्राह्मणाद्व्रात्याज्जायतेभूर्ज्जकंटकः ॥ आवंत्यवाटधानौचपु-
ष्पशेखरजातयः ॥ आभिचारिककर्मात्रभूर्ज्जकंटकिनोऽशनं ॥ मंत्रौषधीशात्रवणांसंमुखीकरणादृते ॥ कुर्वंति
राज्ञांहिततस्तेनेवाविकृताःपरे ॥ अविकृताअदंड्याःसंमुखीकरणंवशीकरणं ॥ राज्ञीषुक्षत्रियाद्व्रात्याज्झल्लमल्लनटा
झषाः ॥ आवित्थिबीकाः करणाद्रमिडाःसंतिभूरिशः ॥ विज्ञेयाः परराष्ट्राणांतैश्चराजाज्ञयाक्रियाः ॥ खसोमल्लस्त-
थावृत्तांमित्रामित्रत्वमेवच ॥ वैश्यस्त्रीषुतथाव्रात्याद्वैश्यात्कारूषकोभवेत् ॥ चतुष्पथेश्मशानेचसभवेन्मित्रमंडलं ॥
तत्रलोकवृत्तांतज्ञोराजाज्ञयास्यादित्यर्थः ॥ मातृमंडनइतिपाठेदेवीपूजकः ॥ सुधन्वाचार्यस्त्वपरोभवेद्रुद्रस्यपूज-

कः॥ तृतीयस्यविजन्माख्यःसूतिकावेश्मपूजकः ॥ तत्स्त्रीसांबिकास्यादित्यर्थः॥ भूतप्रेतपिशाचांश्चपूजयेद्राजशा-
सनात् ॥ साध्यानांपूजकोमेचश्चैत्यादीनांचतुर्थकः ॥ पंचमः सात्वतोनामविष्णोरायतनार्चकः ॥ एभ्योन्यो-
न्यसंकरेनीचाजायंते ॥ तदाहमनुः ॥ यथैवशूद्रोब्राह्मण्यांबाह्यंजंतुंप्रसूयते ॥ तथाबाह्यांतरंबाह्यश्चातुर्वर्ण्येप्रसू-
यते ॥ वर्णजानामन्योन्यसंकरेभेदानाह मनुः॥ प्रतिकूलंवर्तमानाबाह्याबाह्यांतरान्पुनः ॥ हीनाहीनान्प्रसूयंते
वर्णाःपंचदशैवतु ॥ बाह्याश्चंडालाद्याः प्रतिकूलंचातुर्वर्ण्यस्त्रियोगच्छंतः स्वतोबाह्यांतरान्नीचान्जनयंति तेपु-
नरुच्चस्त्रियोगच्छंतोहीनानहीनांश्चसुवते ॥ वर्णाजातयः ॥ अयंभावः ॥ विप्रादनुलोमाएव शूद्रात्प्रतिलोमा
एवमध्यमयोरुभयोरुभयेक्षत्रस्यद्वावनुलोमौ एकः प्रतिलोमः वैश्यस्यैकोनुलोमोद्वौप्रतिलोमौतत्रशूद्राद्विप्राक्ष-
त्रियावैश्यासुक्रमाच्चंडालक्षत्तायोगवास्त्रयः चंडालाद्विप्रादिस्त्रीषुचत्वारः एवंक्षत्तुरायोगवाच्चेतिद्वादश तेचस्वयं
त्रयइतिपंचदश तथावैश्यात्क्षत्रियायांमगधोविप्रायांवैदेहकः शूद्रायांकरणोनुलोमः तैश्चतुर्वर्णस्त्रीषूत्पादिताः
प्रत्येकंचत्वारइतिद्वादश स्वयंचत्रयइतिपंचदश तथाक्षत्रियावैश्यायांमाहिष्यः शूद्रायामुग्रः विप्रायांसूतः प्रति-
लोमः तेभ्यश्चतुर्वर्णस्त्रीषुप्रत्येकंचत्वारइतिद्वादश स्वयंचत्रयइतिपंचदश एवंविप्रात्त्रयोनुलोमाः मूर्धावसिक्तां-





बष्ठपारसवाश्चतुर्वर्णस्त्रीषुप्रत्येकंचतुरोजनयंतीतिद्वादशतेचत्रयइतिपंचदशेतिसर्वेषष्टिसंख्याःदुष्टाः चत्वारोवर्णा-
श्चेतिचतुःषष्टिः ॥ जातिविवेकेत्वन्यथोक्तं ॥ आनुलोम्येनवर्णानांषण्नराःसंप्रकीर्तिताः ॥ प्रातिलोम्येनतेषट्
स्युरितिद्वादशभेदतः ॥ एतेद्वादशमिश्रास्तुचतुर्वर्णैर्विमिश्रिताः ॥ अष्टौचयेस्युर्भेदास्तेषष्टिर्द्वादशसंयुताः॥ ह-
तास्तेषष्टिसंख्यातैः षट्त्रिंशच्छतसंख्यया ॥ भेदाःसंकरजातीनांबहवःस्युस्ततः परेइति ॥ एतेशूद्रसमाः ॥
शूद्राणांतुसधर्माणः सर्वेपध्वंसजाः स्मृता इतिमनूक्तेः ॥ अपध्वंसजाव्यभिचारजाताः ॥ एतत्स्वरूपंद्वत्तय-
श्चोक्ता आदिपुराणेपि ॥ मूर्धावसिक्तोविप्राद्यःक्षत्रियायांप्रसूयते ॥ सकरोतिमनुष्याणांचिकित्सांरोगिणामपि ॥
अपिशब्दात्क्षात्रंकर्मच ॥ ब्राह्मणाच्छूद्रकन्यायांभवेत्पारसवस्तुसः॥ निषादोमत्स्यघातित्वंचक्रेराजाज्ञयासदा ॥
ब्राह्मणेनोग्रकन्यायामंबष्ठोनामजायते ॥ सकरोतिमनुष्याणांचिकित्सांरोगिणामपि ॥ विप्राद्वैश्याजः क्षत्राच्छू-
द्राजश्चेतिद्वावंबष्ठौ ॥ ब्राह्मणेनतथांबष्ठ्यामाभीरोजायतेसुतः ॥ गोजीविरक्षांकुरुतेसचराजगृहेष्वपि ॥ आयो-
गव्यांब्राह्मणात्तुजायतेधिग्वणोनरः ॥ वैश्यायांशूद्रजाआयोगवी ॥ सचकर्मकारोविज्ञेयोगर्हितश्चर्मजीवनः ॥
एतेमातृसधर्माणोनपितुः पुत्रकाश्चषट् ॥ मूर्धावसिक्तपारसवांबष्ठाभीरचर्मकाराः प्रागुक्तावरोटश्चेतिषट्मूर्धाव-

सिक्तोंबष्ठश्चानिषादश्चतथात्रयः ॥ विप्रक्षत्रियविट्शूद्रनारीणांगमनादिह ॥ एकैकशस्तुचतुरोजनयंतिसुतानपि ॥ एतेद्वादशविधंतेमूलप्रकृतिभिर्युताः ॥ भवंतिपंचदशवैविप्रः षोडशकोभवेत् ॥ मूर्धावसिक्ताद्विप्रायांप्रतिलोमाः ॥ क्षत्रादिष्वनुलोमाइतिचत्वारः ॥ एवमंबष्ठान्निषादाच्चेतिद्वादश ॥ स्वयंचैतेत्रयइतिपंचदश ॥ व्रात्यो विप्रः अवरोढोवाषोडश ॥ दस्युसंज्ञाभवंत्येतेमातृवत्कर्मकारिणः ॥ राज्ञोब्राह्मणकन्यायांसूतोवर्णस्तुजायते ॥ सराज्ञामश्वसारथ्यंचक्रेदक्षश्चनित्यशः ॥ सूतः प्रजापतिस्त्वन्योमायारूपीजनार्दनः ॥ वक्तावेदादिशास्त्राणां पुराणानांचसस्मृतः ॥ अन्यइति नाम्नैवसूतोनतुजात्येत्यर्थः ॥ उग्रादिसंज्ञावत्सूतपुत्रउग्रश्रवाः सौतिः पौराणिकोपि ॥ तथा ॥ क्षत्रियाद्वैश्यकन्यायांमाहिष्योनामजायते ॥ नक्षत्रगाननृत्यज्ञोधनानांपरिरक्षिता ॥ राज्ञस्तु शूद्रकन्यायामुग्राख्योनामजायते ॥ दुर्गांतःपुरकोशानांरक्षांविप्रेषुवाचनं ॥ उग्रोदुष्टश्चदस्यूनांकश्चिदन्योपिविद्यते ॥ सूतमाहिष्यकोग्रास्तुत्रयोवर्णचतुष्टयात् ॥ एकैकशस्तुचतुरोजनयंतिसुतानपि ॥ आत्मनासहराज्ञातु तत्रषोडशसंतिते ॥ देवलः ॥ देवब्राह्मणबालस्त्रीदीनांधकृपणैस्तुयत् ॥ उपार्जितंधनंतस्यपरित्यागात्तुदस्यवः ॥ ब्राह्मण्यामथवैश्येनवैदेहोनामजायते ॥ एतेद्वादशविधंतेमूलप्रकृतिभिर्युताः ॥ भवंतिपंचदशवैविप्रः षोडशको



भवेत् ॥ रक्षिताराजदुर्गाणांतद्वृत्तिपरसंयुतः ॥ क्षत्रियायांतुवैश्येनमुचुकोनामतोभवेत् ॥ जलेस्थलेचयोमार्गस्तत्ररक्षांकरोतिसः ॥ राजदूतोवाद्यजीवोभवेत्कीर्तिप्रकाशकः ॥ अयमेवबंदी ॥ वैश्येनशूद्र्यांकरणोवर्णःस्यात्प्रकरोतिसः ॥ दुर्गांतःपुरगंजानांरक्षांब्राह्मणसंग्रहं ॥ गंजातुमदिरागृहमित्यमरः ॥ संग्रहंरक्षणं ॥ वैदेहमागधावेतौकरणश्चेतितेत्रयः ॥ वर्णेभ्यः पूर्ववत्पुत्राञ्जनयंतिविमोहिताः ॥ तेचषोडशजायंतेमूलप्रकृतिभिःसह ॥ दुष्टानिवैश्यकर्माणितेपिकुर्वंतिदस्यवः ॥ ब्राह्मण्यामथशूद्रेणचंडालःस्याज्जुगुप्सितः ॥ सचक्रेराजमार्गादिशोधनंचकुकर्मच ॥ राजस्त्रियांचशूद्रेणक्षत्तामैंदश्चजायते ॥ श्वाविध्यमथगोधानांसचक्रेवधबंधनं ॥ आयोगवस्तुशूद्रेणवैश्यायांतुभवेच्चसः ॥ तक्षास्थपतिरित्युक्तोराज्ञांवेश्मयकः सदा ॥ दारुतक्षकस्तथा ॥ पाषाणभेदकस्थपतिरितिद्वावप्येतद्भेदौ ॥ आयोगवस्तथाक्षत्ताचंडालश्चापितेत्रयः ॥ चतुर्वर्णासुतनयान्जनयंत्यथपूर्ववत् ॥ शूद्रेणसहितास्तेतुसंतिषोडशसंख्यया ॥ दुष्टानियानिकर्माणितेपिकुर्वंतिदस्यवः ॥ एतेविप्रादयोज्ञेयाश्चतुःषष्टिषुयोनिषु ॥ उत्पादयंतिसदृशान्संकीर्णानन्ययोनिषु ॥ अत्रस्वभिन्नासुत्रिषष्टिभिर्जनितास्तासुवातैर्जनिताएकैकस्यषड्विंशत्यधिकंशतंभेदाः॥ तेचचतुःषष्टिभिर्गुणिताः ॥ सहस्राणिनवशतानिअष्टषष्टिश्चभवंति ॥

तेषांवर्णसंकीर्णसंकरेणान्योन्यसंकराच्चानंत्यंविस्तारपत्तेर्नोच्यते ॥ मनुः ॥ शनकैस्तुक्रियालोपादिमाः क्षत्रियजातयः ॥ वृषलत्वंगतालोकेब्राह्मणातिक्रमेणच ॥ व्यभिचारेणवर्णानामवेद्यावेदनेनच ॥ संगेनधर्मत्यागेन जायतेवर्णसंकरः ॥ संगोम्लेच्छादिनीचसंगतिः ॥ एतेषुकांश्चिदाहमनुः ॥ प्रसाधनोपचारज्ञमदासंदासजीविनं ॥ सैरंध्रंवागुरावृत्तिंसूतेदस्युमयोगवी ॥ वैश्यायांशूद्रजायोगवीदस्योर्वर्णसंकरजान्सूते ॥ तेचदस्यवोमनूक्ताः पौंड्रकाश्चौड्रद्राविडाःकांबोजायवनाः शकाःपारदाःपल्हवाश्चीनाः किरातादरदास्तथा ॥ मुखबाहूरुजातानांया लोकेजातयोबहिः ॥ म्लेच्छवाचार्यवाचोवासर्वेतेदस्यवःस्मृताः ॥ एतेम्लेच्छभेदाःप्रसाधनंमंडनं ॥ उपचारोंगमर्दनादि ॥ वसिष्ठस्तुवृत्त्यंतरमाह ॥ सैरंध्राणांसुरामद्यसीधुकरणंतद्विक्रयः पुष्पफलशाकाविक्रयश्चेति ॥ मनुः ॥ मैत्रेयकंतुवैदेहोमाधूकंसंप्रसूयते ॥ नॄन्प्रशंसत्यजस्रंयोघंटावादोरुणोदये ॥ भवंत्ययोगवीष्वेतेइतिमनूक्तेवैश्यायांशूद्रजायोगव्यां विप्रायांवैश्यजाद्वैदेहान्मैत्रेयंसूते सएवमाधूकः ॥ निषादोमार्गवंसूतेदाशंनौकर्मजीवनं ॥ कैवर्तमितियंप्राहुरार्यावर्तनिवासिनः ॥ क्षत्रायांशूद्रजान्निषादात्प्रागुक्तायोगव्यांदाशइत्यर्थः ॥ ब्राह्मणादित्यनुवृत्तौ मनुः ॥ आभीरोंबष्ठकन्यायामायोगव्यांतुधिग्वणः ॥ वैश्यायांविप्रजांबष्ठी तस्यांविप्रादाभीरः अयंगोपा-



लानुलोमःप्रसंगादुक्तो जातिविवेके ॥ वर्तनंगोमहिष्यादिपोषयेत्तृणवारिभिः ॥ पयोदधिघृतंतक्रंविक्रेतव्यंधनार्थिभिः ॥ अस्यभोज्यान्नत्वमाह याज्ञवल्क्यः ॥ शूद्रेषुदासगोपालकुलमित्रार्द्धसीरिणः ॥ भोज्जान्नानापितश्चैवयश्चात्मानंनिवेदयेत् ॥ वैश्यायांशूद्रजायोगवीतस्यांविप्रजोधिग्वणः ॥ शूद्रान्नभक्षणे मनुः ॥ राजान्नंतेजआदत्तेशूद्रान्नंब्रह्मवर्चसं ॥ आयुःसुवर्णकारान्नंयशश्चर्मावकर्तिनः ॥ भुक्त्वातोन्यतमस्यान्नममत्याक्षपणंत्र्यहं ॥ मत्यातुभक्षणेकृच्छ्रंरेतोविण्मूत्रमेवच ॥ यत्तुशंखः। शूद्रान्नंब्राह्मणोभुक्त्वातथारंगावतारिणः ॥ चिकित्सकस्यक्रूरस्यतथास्त्रीमृगजीविनः ॥ चंडालान्नंभूमिपालमजजीविश्वजीविनां ॥ शौंडिकान्नंसूतिकान्नंभुक्त्वामासंव्रतंचरेत् ॥ व्रतंगोमूत्रयावकं ॥ इदमभ्यासे ॥ आमान्नेतुतृतीयांशःचंडालान्नंभुक्त्वात्रिरात्रमुपवसेत्सिद्धान्नंभुक्त्वापराकमितिमाधवीयेचंडालान्नेविष्णुनातथोक्तेः चंडालान्नमामं ॥ आपदितुपराशरः ॥ आपत्कालेतुविप्रेणभुक्तंशूद्रगृहेयदि ॥ मनस्तापेनशुध्येतद्रुपदानांशतंजपेत् ॥ इदमामान्नपरं ॥ नाद्याच्छूद्रस्यपक्वान्नंविद्वानश्राद्धिनोद्विजः ॥ आददीताममेवास्मादवृत्तावेकरात्रिकमितिमनूक्तेः ॥ यत्तुयाज्ञवल्क्यः ॥ शूद्रेषुदासगोपालकुलमित्रार्द्धसीरिणः ॥ भोज्यान्नानापितश्चैवयश्चात्मानंनिवेदयेदिति ॥ यश्चदेवलः ॥ स्वदासोनापितोगोपः

कुंभकारः कृषीवलः ॥ ब्राह्मणैरपिभोज्यान्नाः पंचैतेशूद्रयोनयइति ॥ अत्रान्नशब्दोदनीयमात्रपरोनत्वोदनपरः ॥
यत्तुभविष्ये उपक्षेपणधर्मेणशूद्रान्नंयःपचेद्द्विजः ॥ अभोज्यंतद्भवेदन्नंसचविप्रःपुरोहितः ॥ उपक्षेपणंशूद्रेणस्वा-
न्नस्यपाकार्थंविप्रगृहेसमर्पणमितिकल्पतरुः ॥ इदंशुश्रूषकभिन्नपरं ॥ त्रिषुवर्णेषुकर्तव्यंपक्वभोजनमेवच ॥
शुश्रूषामभिपन्नानांशूद्राणांचवगननेइतिवराहोक्तेः ॥ तेनदेवेभ्योनैवेद्यमपिपक्वेनेतिगंगावाक्यावली ॥ सर्वंक-
लीतरपरमितिशुद्धितत्त्वेउक्तं ॥ संसृष्टदुष्टभोज्येन्नेपिविशेषमाहापरार्केशूलपाणौचसुमंतुः ॥ गोरसंचैवसक्तूंश्च
तैलंपिण्याकमेवच ॥ अपूपान्भक्षयेच्छूद्राद्यच्चान्यत्पयसाकृतम् ॥ पयसान्यासंसृष्टदुग्धेनकृतंपाकंविना ॥
तेनपायसेदोषएवं ॥ पयसेतितृतीययानैरपेक्ष्यावगतेः ॥ शूद्रजलेदोषोक्तेश्च ॥ यच्चेतिचकारादपूपेषुपयःकृतेष्वे-
वभक्ष्यत्वं ॥ तेनजलकृतेपोलिकादौदोषएवेत्यर्थः ॥ अत्रेदंतत्त्वंद्विविधोद्विजः शूद्रान्नरतस्तन्निवृत्तश्च ॥ आद्यस्य
पूर्वोक्तंशूद्रान्नंभोज्यं ॥ अतएवापरार्केशूलपाणौचहारीतः ॥ कंदुपक्वंस्नेहपक्वंपायसंदधिसक्तवः ॥ एतानिशूद्रान्न-
भुजोभोज्यानिमनुरब्रवीत् ॥ द्विजैरेतानिभोज्यानिशूद्रगेहकृतान्यपीतिशुद्धितत्त्वेकौर्मोत्तरार्द्धेपायसंपाकंविनाक्षी-
रेणकृतं ॥ आमंशूद्रस्यपक्वान्नंपक्वमुच्छिष्टमुच्यतेइतिशातातपोक्तेः ॥ यच्चान्यत्पयसाकृतमितिपूर्वमुक्तेः ॥ इदंशूद्र-



गेहेपिभोज्यंतदुक्तंशूलपाणौब्राह्मे ॥ राज्ञांपर्वणिवैश्यानामश्नीयान्मंगलेगवां ॥ वासोभूरत्नहेमान्नंसच्छूद्रस्यगृहे-
तथेति ॥ इदमपिकलौवर्ज्यं ॥ शूद्रेषुदासगोपालकुलमित्रार्द्धसीरिणां ॥ भोज्यान्नतागृहस्थस्यतीर्थसेवातिदूरतः ॥
ब्राह्मणादिषुशूद्रस्यपचनादिक्रियापिवेतिचमाधवीये पृथ्वीचंद्रोदयेचादित्यपुराणात् ॥ शूद्रान्ननिवृत्तस्यतुशू-
लपाणावंगिराःपात्रांतरगतंग्राह्यंशूद्रात्स्वगृहमागतं ॥ शूद्रवेश्मनिविप्रेणक्षीरंवायदिवादधि ॥ निवृत्तेननभो-
क्तव्यंशूद्रान्नंतदपिस्मृतं ॥ विष्णुपुराणे ॥ संप्रोक्षयित्वागृह्णीयाच्छूद्रान्नंगृहमागतं ॥ यत्तुयाज्ञवल्क्यः विकर्म-
स्थान्द्विजाञ्शूद्रान्सवासाजलमाविशेदितिशूद्रस्पर्शेस्नानमाह तद्दासादिभिन्नशूद्रपरंनिवृत्तपरंवा ॥ अन्यथा
मूल्यकर्मकराःशूद्रादासीदासास्तथैवच ॥ स्नानेशरीरसंस्कारेगृहकर्मण्यदूषिताः ॥ सद्यःस्पृश्ययोगर्भदासोभ-
क्तदासस्तुपहाच्छुचिरित्यादिविरोधात् ॥ मनुः ॥ अभोज्यानांतुभुक्त्वान्नंस्त्रीशूद्रोच्छिष्टमेवच ॥ भुक्त्वामांस-
मभक्ष्यंचसप्तरात्रंयवान्पिबेत् ॥ ज्ञानेद्विगुणं ॥ विश्वंभरशास्त्रे माहिष्यायांद्विजाज्जातआभीरः क्षीरविक्रयी ॥
उदवाहःसुतोविप्राद्वैदेह्यांव्यभिचारतः ॥ स्वच्छत्रंधारयेत्कुर्यान्नराणांविक्रयंतथा ॥ क्षत्राद्वैश्यायांमाहिष्यावै-
श्याद्विप्रायांवैदेही ॥ विप्रान्निषाद्यांयोजातः पौष्टिकः ॥ शूद्रयांविप्रान्निषादी ॥ अंबष्ठायांद्विजाज्जातःपुत्रःकां-

स्यस्यकर्मकृत् ॥ कांस्यपात्राणिचित्राणिरचयेज्जीवनायसः ॥ शूद्रधर्मेणसर्वत्रास्थितिरस्यविधीयते ॥ उग्रायां
योद्विजाज्जातःकुंभकारःसउच्यते ॥ सशूद्राद्धीयतेधर्मेघटयेन्मृन्मयान्घटान् ॥ जातिविवेके ॥ व्रात्यःक्षत्रियतः
शूद्र्यांजातःशूद्रविधानकृत् ॥ सकुर्याद्राजपुत्रांश्चशस्त्रास्त्रकुशलान्धनं ॥ तेभ्योलब्धत्वात्मवृत्यर्थंस्वधर्ममनुपा-
लयेत् ॥ राजगुरुः ॥ तस्मान्मल्लःसुतोजातःक्षत्रिण्यांव्यभिचारतः ॥ राज्ञांकौतुकमापाद्यनियुद्धेनार्जयेद्धनम् ॥
वैश्याच्छून्द्यामथांबष्ठ्यांजातोवैतालिकाभिधः ॥ जीवनंकामशास्त्रेणस्तुत्यावाबंदिकर्मणा ॥क्षत्रात्पारसवपुत्रःकिं-
नाढस्ताबकुंदकः ॥ वणिग्जनात्तुविप्रायांजातोंतःपुरपालकः ॥ ब्राह्मण्यांजायतेवैश्याद्योसोवैदेहकाभिधः ॥ शुद्धां-
तरक्षणंराज्ञांकुर्यादनुपमंहिसः ॥ सामान्यवनिताः पोष्यास्तासामाद्याचजीविका ॥ पण्यांगनानांराज्ञांचकुर्यात्सं-
गंतदिच्छया ॥ रूपाजीवासुतास्त्वेवाविशिष्यासंगकोविदः ॥ सएवतासांप्राणेशोनान्यः कांतोपितत्पतिः ॥ चतुः-
षष्टिकलाःकामशास्त्रंतदुपजीवनं ॥ चतुःषष्टिकलाभरतेनोक्ताः ॥ वेदांगागमशिल्पशास्त्रकवितावक्तृत्ववतौर्यत्रि-
कद्यूतास्त्राद्भुतवादसूपरचनाचित्रं पणावैद्यकं ॥ नानारत्नपुराणलेखपुरुषस्त्रीधातुभाषालिपिप्रज्ञानाटककेलिदं-
तितुरगप्रज्ञाचसामुद्रिकं ॥ शय्याभोजनयुद्धमर्दनविभूषाबंधसर्वेंगितज्ञानंरज्जुतरीकलारथकृतिःसौख्येष्टभो-



गेषुधीः ॥ त्राणेवारिविषाग्निवारिपुरथारेवांगशीर्षेषुयद्दुर्गारामकृतिःपशुद्वियनमत्कारः शिवार्चादयः ॥ सुगंधंवानि-
तावस्त्रंगीतंतांबूलभोजनं ॥ शय्याविभूषासुरतंभोगाष्टकमुदाहृतं ॥ शूद्राद्वैश्यायांयोजातोवणिग्जनइतिस्मृतः ॥
पारसव्यांचमाहिष्यान्मालाकारः सउच्यते ॥ कुसुमानिसशाकानिवर्द्धयेद्धनवृद्धये ॥ सहीनःशूद्रधर्मेभ्यःसमूहे
पद्मकेप्रभुः ॥ सूताज्जातस्तुवैदेह्यांसूतकारः सजायते ॥ आयोगव्यांतुवैदेहाज्जातोमैत्रेयकोभवेत् ॥ घंटावादनकृ-
त्प्रातस्तथामंगलगानकृत् ॥ आयोगव्यांतुकरणात्सैरंध्रोगंधकर्मकृत् ॥ पुष्पचंदनपण्यादिशृंगारैस्तस्यजीवनं ॥
पादयोःक्षालनंचैवधम्मिल्लानांप्रसाधनं ॥ प्रत्यंगमर्दनंचैवचंदनेनानुलेपनं॥ मृगनाभेश्चंद्रयोगः शृंगाररचनानवा ॥
आजीवनंतुतस्योक्तंतत्स्त्रीसैरंध्रिकास्मृता ॥ विश्वंभरशास्त्रे प्रसाधनोपचतुरा सैरंध्रीतिप्रकीर्तिता ॥ शैवः पाशुपतः
कश्चिदारूढः पतितोयदि ॥ जंगमइतिप्रसिद्धः ॥ तस्माज्जातः शूद्रपत्न्यांपुत्रोभस्मांकुरःस्मृतः ॥ शिवार्चनंतु
तत्कार्यंशिवदायेनजीवनं ॥ सजटाभस्मधारीचशिवलिंगंप्रपूजयेत् ॥ तांबूलमक्षताद्रव्यंगावः क्षेत्राणिकाकि-
नी ॥ शिवायप्राणिभिर्दत्तमन्यत्किमपिभक्तितः ॥ चंडीशंयत्क्षितौख्यातंतेनतस्येहजीविका ॥ कुशीलवः
सुतोंबष्ठाद्वैदेह्यांनर्त्तनादिकृत् ॥ ज्ञातिविवेके माहिष्यामागधाचैवशुद्धमार्गकसंज्ञकं ॥ जनयेतनयंसोपिशूद्रध-

शू०
१०१

र्मविनाकृतः ॥ गीतंचतुर्विधंवाद्यमभ्यसेज्जीवनायसः ॥ संगीतशास्त्रे ॥ तत्रादौत्रिविधंगीतंवाद्यंचापिचतुर्विधं ॥ चतुर्दशत्रिधंनृत्यंगीतपूर्वविचक्षणैः ॥ चतुर्विधवाद्यमाहामरसिंहः ॥ ततंवीणादिकंवाद्यमानद्धंमुरजादिकं ॥ वंशादिकंतुसुषिरंकांस्यतालादिकंघनं ॥ अयंमृदंगजीवी ॥ निर्मिंडलकआभीराज्जातोसौबाणापिच्छकृत् ॥ शराणांशरपत्रैश्चरचनातस्यजीविका ॥ उग्रायांमागधाज्जातःकुंतलश्मश्रुकर्मकृत् ॥ सनापितइतिप्रोक्तः क्षौरकर्मविधानकृत् ॥ क्षत्राच्छूद्राजउग्रः ॥ वैश्यात्क्षत्राजोमागधः ॥ श्मश्रुकर्तनकृच्चैवनखकर्तनकोविदः ॥ वृत्त्यानयाग्राममध्येतिष्ठेद्वर्णेषुसेवकः ॥ नराणांनापितोधूर्तः शूद्रेभ्योभ्यधिकः स्मृतः ॥ वृद्धमनुः ॥ शूद्रकन्यासमुत्पन्नोब्राह्मणेनतुसंस्कृतः ॥ अपरोनापितः प्रोक्तः शूद्रधर्माधिकोपिसः ॥ याज्ञवल्क्येनतुशूद्रएवनापितउक्तः ॥ शूद्रेषुदासगोपालकुलमित्रार्द्धसीरिणः ॥ भोज्यान्नानापितश्चैवेतिशंखेनतुप्रतिलोमजोयमुक्तः ॥ यत्तुसूतसंहितायां मूर्द्धनापितोधोनापितश्चेतिद्वैविध्यमुक्तंतद्द्वयवस्थितंज्ञेयम् ॥ अथकायस्थोत्पत्तिः ॥ पाद्मेसृष्टिखंडे ॥ सृष्ट्यादौसदसत्कर्मज्ञप्तयेप्राणिनांविधिः ॥ क्षणंध्यानेस्थितस्तस्यसर्वकायाद्विनिर्गतः ॥ दिव्यरूपः पुमान्हस्तेमषीपात्रंचलेखनीम् ॥ चित्रगुप्तइतिख्यातोधर्मराजसमीपतः ॥ प्राणिनांसदसत्कर्मलेख्यायसानियोजितः ॥ ब्रह्म-

क०

१०१

णातींद्रियज्ञानीदेवाग्न्योयज्ञभुक्सदा ॥ भोजनाच्चसदातस्मादाहुतिर्दीयतेद्विजैः ॥ ब्रह्मकायोद्भवोयस्मात्कायस्थोजातिरुच्यते ॥ नानागोत्राश्वतद्वंश्याः कायस्थाभुविसंतिवै ॥ स्कांदेरेणुकामाहात्म्ये ॥ एवंहत्वार्जुनंरामः संधायनिशितान्शरान् ॥ अन्वधावत्सतान् हंतुंसर्वानेवातुरान्नृपान् ॥ केचिद्गहनमाश्रित्यकेचित्पातालमाविशन् ॥ सगर्भाचंद्रसेनस्यभार्यादाल्भ्याश्रमंययौ ॥ ततोरामःसमायातोदाल्भ्याश्रममनुत्तमं ॥ पूजितोमुनिनारामोह्यर्घ्यपाद्यासनादिभिः ॥ ददौमध्यान्हसमयेतस्मैभोजनमादरात् ॥ रामस्तुयाचयामासहृदिस्थंस्वमनोरथं ॥ याचयामासरामाच्चकामंदाल्भ्योमहामुनिः ॥ ततोद्वौपरमप्रीतौभोजनंचक्रतुर्मुदा ॥ भोजनानंतरंदाल्भ्यःपप्रच्छभार्गवंप्रति ॥ यत्त्वयाप्रार्थितंदेवतत्त्वंशंसितुमर्हसि ॥ रामउवाच ॥ तवाश्रमेमहाभागसगर्भास्त्रीसमागता ॥ चंद्रसेनस्यराजर्षेःक्षत्रियस्यमहात्मनः ॥ तन्मेत्वंप्रार्थितंदेहिहिंसेयंतांमहामुने ॥ ततोदाल्भ्यःप्रत्युवाच ददामितववांछितं ॥ यन्मयाप्रार्थितंदेवतन्मेदातुंत्वमर्हसि ॥ ततःस्त्रियंसमाहूयचंद्रसेनस्यवैमुनिः ॥ रामाय प्रददौभीतांरामःप्रीतमनाअभूत ॥ रामउवाच ॥ यत्त्वयाप्रार्थितंविप्रभोजनावसरेपुरा ॥ तन्मेशंसमहाभाग ददामितववांछितं ॥ दाल्भ्यउवाच ॥ स्त्रियोगर्भममुंबालंतन्मेत्वंदातुमर्हसि ॥ ततोरामोब्रवीद्दाल्भ्यंयदर्थम-

हमागतः ॥ क्षत्रियांतकरश्चायंतत्त्वंयाचितवानसि ॥ प्रार्थितश्चत्वयाविप्रकायस्थोगर्भउत्तमः ॥ तस्मात्का-
यस्थइत्याख्याभविष्यतिशिशोः शुभा ॥ एवंरामोमहाबाहुर्हित्वातुगर्भमुत्तमं ॥ निर्जगामाश्रमात्तस्मात्क्षात्रियांत-
करः प्रभुः ॥ कायस्थएषउत्पन्नः क्षात्रिण्यांक्षत्रियात्ततः ॥ रामाज्ञयासदाल्भ्येनक्षात्रधर्माद्बहिष्कृतः ॥ दत्तः
कायस्थधर्मोस्मैचित्रगुप्तस्ययःस्मृतः ॥ तद्गोत्रजाश्चकायस्थादाल्भ्यगोत्रास्ततोभवन् ॥ दाल्भ्योपदेशतस्तेवै
धर्मिष्ठाः सत्यवादिनः ॥ सदाचारपरानित्यंरताहरिहरार्चने ॥ देवविप्रपितॄणांवैअतिथीनांचपूजकः ॥ मा-
हिष्यवनितासूनुर्वैदेहाद्यंप्रसूयते ॥ सकायस्थइतिप्रोक्तस्तस्यकर्मविधीयते ॥ क्षत्रियाद्वैश्यायांमाहिष्यो विप्रा-
यांवैश्यजोवैदेहः ॥ लिपीनांदेशजातानांलेखनंससमाचरेत् ॥ गणकत्वंविचित्रंचबीजपाटिप्रभेदतः ॥ अधमः
शूद्रजातिभ्यःपंचसंस्कारवानसौ ॥ चातुर्वर्ण्यस्यसेवाहिलिपिलेखनसाधनं ॥ व्यवसायःशिल्पकर्मतज्जीवनमुदा-
हृतं ॥ शिखांयज्ञोपवीतंचवस्त्रमारक्तमंभसा ॥ स्पर्शनंदेवतानांचकायस्थाद्योविवर्जयेत् ॥ इतिकायस्थः ॥ मा-
लाकाराच्चलावद्यःकरण्यांमणिरंध्रकृत् ॥ मणिहारः मंजुरितिचोच्यते ॥ कुलाल्यांशाल्मलोमंजोर्नागवल्यास्तु
विक्रयी ॥ तांवूलक्रीतसंभूतंद्रव्यंतस्येहजीवनं ॥ मालाकारात्क्षत्रियायांशिलींध्रोमर्दनक्रियः ॥ हीनःसशूद्र-



धर्मेभ्योजीविकास्यांगमर्दनं ॥ शिलींध्रात्क्षत्रियायांचकोल्हाटीनामजायते ॥ बहुरूपीतिप्रसिद्धः ॥ वैश्यात्क-
रण्यांयोजातोगोचारीवत्सपालकः ॥ नाम्नाछागलकंपुत्रंघटधानादजीजनत् ॥ मंजुभार्यासवैलोकेअजापाल
इतिस्मृतः ॥ तथा कर्मचांडालभार्यायांयोजातः पुष्पशेखरात् ॥ सवैमंडलकोनामशुनांमंडलपोषकः ॥ युगु-
लंशुनकानांसधर्त्तुयोज्योमहीभृता ॥ विधवायांयतेर्जातःकर्मचांडालउच्यते ॥ वापीकूपादिमृत्कर्मकर्ताचास्पृ-
श्यएवसः ॥ जातिविवेके ॥ अंबष्ठाच्चैववैदेह्यांजातः पुत्रः कुशीलवः ॥ संगीतज्ञोनृत्यकर्त्तादेशाद्देशांतरंव्रजे-
त् ॥ आयोगवान्मागधायांभृकुंसइतिजायते ॥ सवर्णबाह्यधर्मेषुसम्यक्संगीतकोविदः ॥ कांतानांनृत्यशाला-
यांनृत्यंलास्यंचशिक्षयेत् ॥ रंगावतारः कर्तव्योनाट्येचनृपसंसदि ॥ चतुर्विधैरंगभावैर्देशभाषांगसंभवैः ॥ अंगभा-
वाश्चभरतेनोक्ताः ॥ कायिकोवाचिकश्चैवआहार्यःसात्विकस्तथा ॥ चत्वारोभिनयाःप्रोक्तानाट्यशास्त्रविशारदैः ॥ सं-
गीतशास्त्रे ॥ गीतंवाद्यंचनृत्यंचत्रयंसंगीतमुच्यते ॥ संगीतशब्दोनृत्येतुकेवलेनैवगीयते ॥ सुकुमारंभवेल्लास्यमुद्ध-
तंतांडवंविदुः ॥ तांडवंपदघाताद्यैर्लास्यंरससमन्वितं ॥ दृष्टिहस्तकभाषाद्यैर्भ्रामरीचोरिकादिभिः ॥ कुचबाहूरुद-
क्पातैस्तरुणीनांतदद्भुतं ॥ कायस्थवनितायातुमालाकारेणसंगता ॥ तस्यांयस्तेनपुत्रःस्यात्सशाकल्यइति स्मृतः ॥

कांताकरेषुरचयेद्गजदंतकलापिकाः ॥ सहीनः शूद्रजातिभ्योमणीन्विरचयेत्सदा ॥ स्फटिकान्बदरादींश्वकुर्या-
त्तद्रव्यजीविकां ॥ वैदेहाच्छूद्रकन्यायांजातस्त्वांधसिकाभिधः॥ कुर्यादन्नानिभक्ष्याणिविक्रयार्थंससंधितम् ॥ अ-
नेविक्रयतो लब्धंतद्धनंतस्यजीवनं ॥ कांदूइतिप्रसिद्धः ॥ करणीवैश्यसंयोगाज्जातोवत्सकसंज्ञकः ॥ सहीनः
शूद्रधर्मेभ्यः शाड्वलेगाश्वचारयेत् ॥ वैश्यस्त्रीशूद्रसंयोगादायोगवकसंज्ञकः ॥ सशूद्राद्धीयतेधर्मैःपाषाणेष्टककर्-
मकृत् ॥ सकुर्यात्कुट्टिमांभूमिंचूर्णेनास्यचजीवनं ॥ निषादकन्यकाशूद्रसंगाद्यंजनयेत्सुतं ॥ सक्रोधकः कुक्कुट-
कइतिप्रोक्तोहिसंज्ञकः ॥ टंकशालासुसर्वत्रनाणकानांविधायकः ॥ योमागधीक्षत्रिययोर्जातउल्मुकसंज्ञकः ॥ स
लोहकर्मणाजीवेदुत्तमश्चांत्यजातितः ॥ लोहकारइतिख्यातोलौहंकर्मास्यजीवनम्॥ तेषांतुगुणसंयोगंज्ञात्वाशस्त्र-
विधायकः ॥ लक्षणकांडे ॥ शस्त्रांगुलंषट्समेतंसप्तहृच्छेदकाभिधः ॥ शस्त्रस्वामीशयोर्वैरंमृत्युकार्यन्यथाशु-
भं ॥ इतिलोहकारस्मृतिः ॥ तैलभ्रमणयंत्राणांयावच्छब्दःप्रवर्त्तते ॥ तावत्कर्मनकुर्वीतशूद्रांत्यजसमर्पितः ॥
कुक्कुटस्येहभवतिकुंभकारेणसंगता ॥ तस्याःसूनुस्तुविख्यातः कुरुविंदइतिस्फुटं ॥ कौशेयानिसवस्त्राणिरचये-
दात्मवृत्तये ॥ तुल्योसावंत्यजातीनांस्वधर्मंसतुपालयेत् ॥ साळी ॥ संगतावेनवनितावर्तकेनयदारहः ॥ तस्याः

शाबरिकाभिख्यः पुत्रोसौलोकसंमतः ॥ सहीनस्त्वंत्यजातिभ्यः शुचिवासोविधायकः ॥ कुविंदः ॥ आभीरीकुक्कु-
टाभ्यांयोजातः सोखिरसंज्ञकः ॥ सकुर्यात्तुसरीणांहिवासांसिस्वात्मवृत्तये ॥ तद्वैपरीत्याज्जातोयोनीलीकर्तास
कथ्यते ॥ मार्गनापितयोर्जातोयोसौसाखिल्यसंज्ञकः ॥ हीनःसगुह्यकेशानांकुर्याद्वपनमंजसा ॥ जलौकातुंबीशृं-
गाणिरक्तस्रावेप्रयोजयेत् ॥ जातोमैत्रेयशुक्लेनजांधिकायांस्वयंसुतः ॥ असौबंधुलसंज्ञोत्रअधमः सर्वजातिषु ॥
सुवर्णकारविपणेधूल्यांहेमादिपश्यति ॥ निषादनारीसंयोगात्पौष्टिकंजनयेत्सुतं ॥ सचपांसुलसंज्ञोहिशणसूत्र-
विधायकः ॥ कर्ताचगौणीपट्टानांजीविकातस्यतद्धनं ॥ पुल्कसस्त्रीपांसुलकात्सूतेयावासिकाभिधं ॥ कु-
र्यात्सतुरगादीनांशष्पेणैवचवर्त्तनं ॥ घासी ॥ मेदस्यवनिताकार्यात्संगतांध्रेणचेद्रहः ॥ सासूतेयवनंपुत्रंतुरुष्कः
सप्रकीर्तितः ॥ प्रसिद्धोम्लेच्छदेशेयोगोवधेनास्यवर्तनं ॥ बंदिनीशूद्रसंयोगात्जातः स्पंदालिकाभिधः ॥ चतु-
र्वर्णविहीनोसौमंजिष्ठारंगकारकः ॥ तेनरंगेणवासांसिचित्राणिरचयेत्सदा ॥ हस्तलेख्यंविचित्रंचद्विधाताचित्र-
साधनं ॥ सएवशुचिकःख्यातःकर्त्तरीसूचिकार्जकः ॥ मागध्यांक्षत्रियाज्जातउल्मुकोलोहकर्मकृत् ॥ उग्रा-
त्पारसवीपुत्रोमौकलिस्तैलिकोभुवि ॥ रजकोवर्णतोहीनः प्रथमश्चांत्यजेषुसः ॥ वस्त्रनिर्णेजनंकुर्यादात्म-

वृत्त्यर्थमेवच ॥ उग्रजातंतुवैदेह्यांमंजूषंरंजकंविदुः ॥ शूद्रायांक्षत्रादुग्रः ॥ विप्रायांवैश्याद्वैदेही ॥ व-
हेदसौतैलयंत्रमुत्तमश्वांत्यजातितः ॥ तैलहिंसायंत्रवाकर्षणात्पापसंभवः ॥ अतोमौकलिकोनित्यंनिर्वा-
स्योनगराद्बहिः ॥ रथकारस्यदुहितासायोगवसमागता ॥ सूतेयंतनयंसोपिसूत्रधारइतीरितः ॥ जाया-
जीवश्वशैलूषोनाट्यशास्त्रविशारदः ॥ वेन्यामावर्तकाज्जातःसचारःसूत्रवायकः ॥ छागलीभूज्जकंठात्तुऔ-
रभ्रंमेषपालकं ॥ कुर्यादूर्णापटांश्चित्रान्मेषाणांपरिपालनं ॥ आवर्त्तकस्यभार्यायांक्षेमकादुष्ट्रपालकं ॥
रौमिकंदेशिकामल्लाद्युक्तंलवणकर्मणि ॥ आयोगव्यांद्विजाज्जातोधिग्वणःकवचादिकृत् ॥ सचर्मणाऽश्व-
पल्याणंयथाशोभंप्रकल्पयेत् ॥ मोचीसंज्ञः ॥ आयोगवीचकैवर्त्तंजज्ञेपारसवात्सुतं ॥ सहीनःसर्वजातिभ्यो
जालंस्वीकृत्यसर्वदा ॥ मत्स्यान्जलचरानन्यान्घातयेदात्मवृत्तये ॥ नाव्यंकर्मप्रहरणंनद्यांवर्षासुवाहयेत् ॥ न-
दीमुत्तारयेल्लोकांस्तेभ्यश्चेच्छेद्धनंतथा ॥ धिग्वण्यांतुनिषादाद्यश्चर्मकारःसतुस्मृतः ॥ गोचर्मणामहिष्याश्वचर्मणा
तस्यजीवनं ॥ आभीरस्त्रीलभेद्धेनात्पुत्रंशौंडिकसंज्ञकं ॥ सुरांसकृत्वाविक्रीयकुर्यात्तेनचवर्त्तनं ॥ कर्मचंडालका-
त्पुत्रंवैदेहीपांडुसोपकं ॥ लेभेबुरुडजातित्वंसदावंशविदारणं ॥ जातोनिषादाद्वैदेह्यांगारुडीडिंडिमोत्तमइत्या-



दि ॥ मनुः ॥ चंडालात्पांडुसोपाकस्त्वक्सारव्यवहारवान् ॥ आहिंडकोनिषादेनवैदेह्यामेवजायते ॥ विप्रायांवै-
श्यजावैदेहीत्वक्सारोवेणुः ॥ तच्छेदक्रियादिजीवी ॥ अयंबुरुडः ॥ वैदेह्यामेवक्षत्रायांशूद्रजानिषादादाहिंडकः ॥
अयंवेणुजीवीश्वपाकः ॥ चंडालेनतुसोपाकोमूलव्यसनवृत्तिमान् ॥ पुल्कस्यांजायतेपापःसदासज्जनगर्हितः ॥-
मूलंमूख्यंव्यसनमसुवियोगोवध्यमारणंसैववृत्तिःक्षत्रायांशूद्रजोनिषादःतस्माच्छूद्रायांपुल्कसी कसारइतिप्रसि
द्धः ॥ निषादस्त्रीतुचंडालात्पुत्रमंत्यावसयिनं ॥ श्मशानगोचरंसूतेबाह्यानामपिगर्हितं ॥ केचिदादिपुराणेप्यु-
क्ताः ॥ निषाद्यामथशूद्रेणकुक्कुटःस्यात्करोतिसः ॥ चक्रतोमरशूलासिलकुटप्रासतोमरान् ॥ चक्राणिशस्त्र-
जालानिभिंडिपालांश्चभूभुजां ॥ कुक्कुटानांप्रहर्त्तांचराजकुक्कुटखेलनः ॥ अंबष्ठ्यांजायतेवेनोवैदेहेनकरोतिसः ॥
पटहंवादयन्स्फीतंराजादेशंप्रजास्वपि ॥ पुल्कसःकुक्कुटोवेनस्त्वथआरण्यवासिनः ॥ आयोगव्यांदस्युनाचसै-
रंध्रोनामजायते ॥ दस्युःपौंड्रकादिःप्रागुक्तः ॥ मृगादिवधजीवीचपाशबंधेननित्यशः ॥ राजस्त्रीणांसूतिकानां
द्वाररक्षांकरोतिसः ॥ आयोगव्यांनिषादात्तुधीवरोनामजायते ॥ नावोनदीनांकर्तासतांचसंवाहयेत्सदा ॥ नि-
षादादथवैदेह्यांकारावारःकरोतिसः ॥ चर्मणांच्छेदनंनित्यंसीवनंक्रयविक्रयं ॥ निषाद्यामथवैदेहाज्जायतेचंद्र-

मेचकः ॥ आरण्यानांपशूनांसकरोतिचवधंसदा ॥ तस्यस्त्रीगमनात्क्षत्ताश्वपाकंजनयेत्सुतं ॥ श्वमांसादमरण्य-
स्थंपापशूर्पोपजीवनं ॥ चंडालादपिवैदेह्यांपांडुसोपाकसंज्ञकः ॥ उपानच्चर्मवेणूनांविक्रयंहिकरोतिसः ॥
आहिंडकोनिषाद्यांचवैदेहादपिजायते ॥ योदस्यूनांतुवध्यानांपरिरक्षांकरोतिच ॥ अंत्यावसायीचांडालान्निषा-
द्यांजायतेनरः ॥ श्मशानवासीतद्वृतिश्चंडालेष्वपिगार्हितः ॥ अनाथंनगराच्छावंदूरंतेचनयंत्यपि ॥ शय्याभरण-
वस्त्राणिवध्यानांराजशासनात् ॥ निर्दिष्टंवधदंडंतुकृत्वाघ्नन्तिनित्यशः ॥ विवाहादिप्रकुर्वंतिसमानेवर्णसंकरे ॥
मृतागोब्राह्मणार्थंतुकदाचित्संतरंतिते ॥ वसिष्ठः ॥ नौजीविकाचनिषादानांकैवर्तानांमृगपशुपक्षिघातोमांस-
विक्रयश्च आवृत्तानांहस्त्यश्वाधिकार आभीराणांगोजाविरक्षा धिग्वणानांचर्मकरणंतद्विक्रयजीवनंच कारावरा-
णांचर्मछेदनंदीपासनरक्षणंछत्रधारणंनराणांवाहनंच ॥ अयंकहारभोईइतिप्रसिद्धः ॥ तंतुवायत्ववृक्षछेदनरोपणा-
निकुक्कुटानां अंध्रमेदानांगृहद्वाराशुचिस्थानावस्कारशोधनंगुह्यांगस्पर्शनोच्छिष्टविण्मूत्रोद्वहनंचक्रवृत्तिताच गु-
ह्यांगस्पर्शःशौचमधोनापितत्वंवा चक्रवृत्तितातैलिकत्वमितिस्मृतिमंजरी मधूकानांप्रातर्नृपतिसंस्तवाख्यानवर्णनं
निद्राबोधनंप्रव्रज्यावसितानांयावज्जीवंदासवृत्तित्वंमूलवृत्तित्वंशूर्पकरणंचपुल्कसानांमूलंवृक्षौषध्यादेः चंडालां-

त्यावसायिनांवनश्मशानरक्षणंगराग्निविषप्रयोगश्चस्त्रीणांभर्तृशुश्रूषाऽन्नव्यंजनपानसंस्कारोनृत्यगीतकामसूत्राध्य-
यनंचयत्पुंसामन्यव्यंजनादिकार्यंतत्तत्स्त्रीणामपिचारणादिस्त्रीणांतुनृत्यादिसर्वेबाह्याःसर्वधर्मबहिष्कृताअन्यत्रप्रा-
णिसंरक्षणात्अहिंसादिश्चधर्मःसर्वतुल्यःअहिंसासत्यमस्तेयंशौचमिंद्रियनिग्रहः॥दानंदमोदयाशांतिःसर्वेषांधर्मसा
धनमितियाज्ञवल्क्योक्तेः ॥ पित्रोराब्दिकेसजातिभोजनंवस्त्रहेमादिदानंकार्यमित्युक्तंप्राक्॥शंखस्त्वन्यथाह ॥ सू-
तानामन्यसंस्कारक्रियाकेशश्मश्रुरोमनखवापनस्नानविलेपनालंकरणाश्वदमनयोग्याशनपोषणानिकर्माणि ॥
योग्याशनंघासादि क्षत्तुः प्रतिहाररक्षादौत्ये मागधानांमृदंगवीणावेणुवादननृत्यगीतसिद्धिकोपस्थानगाथालो-
कप्रत्यूषप्रबोधनानिसिद्धिरिति ॥ कोपसमयेतच्छामकगाथांपठेत् ॥ जयजीवेतिशब्दःसिद्धिशब्दार्थः ॥ अंबष्ठा-
नांकायशल्यशलाकाविमोचनोन्मादक्लीबज्वरापस्मारचिकित्सापोषणानिकर्माणि ॥ कायाच्छल्यस्यशलाकाः
शिराः तासांमोचनंभेदः वैदेहकानांवस्त्रच्छेदनसीवनरंजनावनिर्णेजनवापीतडागोदकपानारामावकरशोधनानि-
कर्माणि ॥ उग्राणांकुंजरग्रहणराजच्छत्रधारणपुरप्रधारणबंधनागारसंयमनानि ॥ वेनानांलंघनंप्लवनाक्रीडानि-
युद्धमायाशंबरेंद्रजालानिकर्माणि ॥ नियुद्धंबाहुयुद्धंमायाशंबरंलाघवाद्द्रव्यपरिवर्तनं ॥ इंद्रजालमसद्वस्तुदर्श-

शू०
१०६

नादि ॥ कुकुटानांप्रहरणचक्रतोमरभिंडिपालप्रासासिपरशुलगुडलोहजालिकासंधानानि ॥ प्रहरणमायुधंलोह-
जालिकाकवचं ॥ आयोगवानामयस्करणतक्षणकुंभकरणानि ॥ सुवर्णरजतलोहासिचर्मद्दत्तिताचेति ॥ पुल्क-
सानांनगरवीथीसंरक्षणजागरणानाथमृतनिर्हरणालेख्यपत्रच्छेदनानि ॥ मधुपातनंमाक्षिकोद्धरणंबिलकर्त्तनंकू-
पादिखननंच ॥ चंडालानांश्मशानसंरक्षणशूलपरिवापनवध्यघातादिकर्माणि ॥ श्वपचनानांचैतत् ॥ अत्रैक-
स्यनानाकर्मणांविकल्पः समुच्चयोवा ॥ अन्येजातिविवेकेज्ञेयाइतिसंक्षेपः ॥ ननुकलौक्षत्रियवैश्याभावउक्तोभा-
गवतेनवमस्कंधे ॥ इक्ष्वाकूणामयंवंशः सुमित्रांतोभविष्यति ॥ यतस्तंप्राप्यराजानः संस्थांप्राप्स्यंतिवैकलौ ॥
देवापियोंगमास्थायकलापग्राममाश्रितः ॥ सोमवंशंकलौनष्टंकृतादौस्थापयिष्यतीति ॥ द्वादशेपि ॥ एतेषांनामलिं-
गानांपुरुषाणांमहात्मनां ॥ कथामात्रावशिष्टानांकीर्तिरेवस्थिताभुवि ॥ देवापिः शंतनोर्भ्राताम रुश्चेक्ष्वाकुवंश-
जः ॥ कलापग्रामआसातेमहायोगबलान्वितौ ॥ ताविहैत्यकलेरंतेवासुदेवानुशिक्षितौ ॥ वर्णाश्रमयुतंधर्मंपूर्ववं-
त्प्रथयिष्यतः ॥ विष्णुपुराणेपि ॥ देवापिः पौरवोराजामरुश्चेक्ष्वाकुवंशजः ॥ कृतेयुगइहागत्यक्षत्रप्रावर्त्तकौहि-
तौ ॥ तथा ॥ महापद्मपतिः कश्चिन्नंदःक्षत्रविनाशकृत् ॥ नंदश्चकलेरादौपरीक्षितोनंतरंजातः ॥ आरभ्यभव-

क०

१०६

तोजन्मयावन्नंदाभिषेचनं ॥ एतद्वर्षसहस्रंतुशतंपंचदशोत्तरं ॥ पुराणांतरेपि ॥ ब्राह्मणाः क्षत्रियावैश्याः शूद्रव-
र्णास्त्रयोद्विजाः ॥ युगेयुगेस्थिताःसर्वेकलावाद्यंत्ययोः स्थितिरिति ॥ अतःकथंद्विजसंकरजाः उक्ताः ॥ मैवं क-
लौतुबीजभूतास्तुकेचित्तिष्ठंतिभूतले ॥ तथैव देवापिपुरूसांप्रतंसमवास्थितौइतिविष्णुपुराणाद्ब्रह्मक्षत्रविशः
शूद्राबीजार्थेयइहस्थिताः ॥ कृतेयुगेहितैः सार्द्धंनिर्विशेषास्तदाभवन्निितिमात्स्योक्तेश्वप्रच्छन्नरूपाः स्वकर्मभ्रष्टाः
क्षत्रियावैश्याश्चसंत्येवक्वचिदित्यसमत्पितृचरणाः ॥ योभाट्टतंत्रगहनार्णवकर्णधारःशास्त्रांतरेषुनिखिलेष्वपिमर्म-
भेत्ता ॥ योत्रश्रमः किलकृतःकमलाकरेणप्रीतोमुनास्तुसुकृतविबुधरामकृष्णः ॥ इतिश्रीमज्जगद्गुरुमीमांस-
कनारायणभट्टसूरिसूनुरामकृष्णभट्टात्मजकमलाकरभट्टकृतेशूद्रधर्मतत्त्वेशूद्रसमसंकरजस्वरूपंतद्वत्तिनिरूपणं ॥
समाप्तश्चायंनिबंधः ॥ छ ॥ श्रीरस्तु ॥ छ ॥ शुभंभवतु ॥ छ ॥ शुभंमस्तु ॥ छ ॥

स्वदेशहितनिष्ठेनश्रीमच्छ्रीधरसूनुना ॥ गोंधलेकरइत्याख्याख्यातत्र्यंबकशर्मणा ॥ १ ॥ जनानांज्ञानवृद्ध्यर्थंयाज्ञिकानांसुखायच ॥ जगद्धितेच्छुनिनिजेपुण्यस्थेमुद्रणालये ॥ २ ॥ अंगभूमिवसुक्षोणिसंमितेशालिवाहके ॥ चैत्रशुक्लप्रतिपदि जये रविजवासरे ॥ ३ ॥ मुद्रितः शोधयित्वाऽयंसच्छूद्रकमलाकरः ॥ विबुधानां मुदेभूयादेषसंततचिंतितः ॥ ४ ॥ हें पुस्तक पुणें पेठ शनवार मेहुणपुरा येथें रावजी श्रीधर गोंधळेकर यांणीं आपले जगद्धितेच्छु छापखान्यांत छापिलें. मिति चैत्र शुद्ध १ शनिवार शके १८१६ जयनामसंवत्सरे ॥ द्वितीयावृत्तिः ॥ श्रीशंकर ॥

